...मदत्तशास्त्रिणा 'श्रीशेन' प्रणीतः

# ...-विजयः

(...या हिन्द्यनुवादेनचोपेतः)

व्याख्याकारः-

आचार्य शिवप्रसाद द्विवेदी [ श्रीधराचार्यः ]

स्वर्गीय श्रीमदीशदत्तशास्त्रिणा 'श्रीशेन' प्रणीतः

# प्रताप-विजयः

( संस्कृतव्याख्यया हिन्द्यनुवादेनचोपेतः )

व्याख्याकारः-

शिवप्रसाद द्विवेदी साहित्यवेदान्ताचार्यः

एम. ए. ( हिन्दी-संस्कृत )



# प्रताप-विजयकर्तुः परिचयः

प्रताप–विजयग्रन्थस्य कर्त्ता स्वर्गीयः श्रीमदीशदत्तशास्त्री श्रीशो वर्तते। अस्य कवेर्जन्म उत्तर-प्रदेशस्य 'आजमगढ़' जनपदान्तर्गते 'मुगमास' नाम्नि ग्रामे १९७२ वैक्रमाब्दे मार्गशीर्ष कृष्णाष्टम्याँ भौमवारे अभूत्। कवेः पितृचरणाः श्री पण्डित अम्बिकादत्तपाण्डेयाः व्याकरणाचार्याः लखीमपुरखीरी। जनपदान्तर्गतस्य सनातनधर्मकालेजस्य प्रधानाध्यापकाः आसन्। तत्रैवास्य कवेः शिक्षणमारब्धमभून्। अथ कविः वाराणसेय संस्कृतविश्वविद्यालयस्य साहित्याचार्यपरीक्षामुत्तीर्य काव्यतीर्थ – साहित्यरत्नपरीक्षयोरुपाधि मप्यर्जितवान्।

वाराणस्याः काशीपण्डितसभा कविमिमम् सुकविशिरोरत्नमित्यु–पाधिना व्यभूषयत्! अयं कविःसंस्कृत–हिन्द्योः उभयोरेव भाषयोः कविता प्रणयने सक्षम आसीत्। सहैवायम् कुशलो लेखकः, समर्थः सम्पादकः, समालोचकः, अप्रतिमोऽभिभाषकश्च आसीत्!

श्री कविः 'ईशदत्तः' 'श्रीशः, सुप्रभातम् नामकस्य पत्रस्य सहसम्पादकः 'भारतश्रीः' नामकस्य पत्रस्य सम्पादकश्च आसीत्। कविरयम् अनेकेषां काव्यानां खण्डकाव्यानाञ्च प्रणयनमकार्षीत् तेषु काव्यादीनामिदमन्यतममास्ते खण्डकाव्यम्! कविः श्रीशः त्रिंशत् वर्षवयस्कः अकाल एव २००२ वैक्रमाब्दे परमपदमगाद्भुवमिमां विरहय्य।

अस्मिन् प्रताप–विजयनाम्नि खण्डकाव्ये कवेरस्य देशभक्तिः समभिव्यजिता वर्तते। यदा अकबरो नामकः मौगलो नृपतिः हिन्दू–भिस्सह सर्ग विधाय तेषां कन्या उपयेमे, तान् सबन्धिहिन्दूंश्च तानि–तानि पदानि प्रायच्छत, तदाऽयम् 'मेवाड़' भूमेनृपतिः प्रतापसिंहः तस्याकंबरस्य संगं तिरश्चकार प्रतिजज्ञे च भारतवर्ष स्वतन्त्रम् कर्तुम् कदाचित् शोलापुरीयं महारणं विजित्य अकबरस्य सेनापतिः मानसिंहोऽस्यातिथिर्बभूव प्रतापसिंहस्य। समागतम् मानसिहम् प्रताप-

सिंहात्मजः अमरसिंहः यथासंभवं समादृतवान् परन्तु प्रतापसिंहः तस्य सन्निकटे सकृदपि नह्याजगाम। भोजनकालेऽपि अनागतम् प्रतापसिंहमवेक्ष्य मानसिंहस्तस्यानागमनस्य कारणमप्राक्षीत्। तेन पृष्टोऽमरसिंहोऽवादीत् – शिरोवेदनया विकलो मम पिता भवता साकं भोजनं कर्तुमक्षमः' इति। तदनन्तरम् – भोजनं विहाय भोजन-स्थलादुत्थितो मानसिंहोऽवोचत् — प्रतापसिंहेन तिरस्कृतोऽहमत्र तामोषधिमानयितास्मि यया पुनः तस्य शिरोवेदना मा भवेत्। ततो गृहान्निस्सृत्य प्रतापसिंहः प्रावोचत्--याहि रे क्षत्रियकुलकलंक! यवनाय कन्याजन – प्रदानेनलब्धसेनापतित्व! –त्वया सह मदीया का मैत्री? नूनमायाहि यवनसेनया सुसज्जितः। तदात्वे ते कराल-कुन्तकरेण मया स्वागतम् करिष्यते। एतदनंतरम् चतुर्दश – सहस्र क्षत्रीयवीरसमन्वितः प्रतापसिंहः 'अरावल्याः' दर्याम् हल्दीघाटीति नाम्ना प्रथिते स्थले असंख्ययवनसेनासमन्वितेन मानसिंहेन सह युद्धमारचितवान्। यस्य युद्धस्य महत्त्वम् भारतीयो बालोऽपि जानाति।

नूनमस्य 'प्रतापविजयस्य' संस्कृत व्याख्यायाः अभावः आसीत् अतएव सरलतमया संस्कृतव्याख्यया प्रतापविजयमिमम् व्याचकार अयं जनः। अनया व्याख्यया चेदल्पोऽप्युपकारो भवति छात्राणाम् तर्हि नूनं मे श्रमः सफलतां गत इति मनुतेऽयं विदुषां वशंवदः –

शिवप्रसाद द्विवेदी

# सरस्वतीस्तवः

( आत्मनिवेदनम् )

पूर्णेन्दु सुन्दर-मुखि ! प्रतिभाऽभिरामे! वामे विधेः, सुवचसां वचसां विरामे ! ।
गीर्वाणवाणि ! भुवनाऽऽभरणं भवत्याः वन्दे दयाऽऽर्द्रचरणं शरणं जगत्याः ॥

ज्योत्स्ना-पूर्णश्चासौ इन्दुः पूर्णेन्दुः पूर्णचन्द्रः तमिव सुन्दरं मनोहरं मुखं यस्याः तत्सम्बुद्धौ पूर्णेदुसुन्दरमुखि ! प्रतिभया-नवन वोन्मेषशालिन्या बुद्ध्या ; अभिरामा-रम्या तत्सम्बुद्धौ प्रतिभाभि रामे ! विधेः -ब्रह्मणः, वामे-जाये ! सुवचसाम् - मनीषिणाम् वचसाम् वाणीनाम् विरामे-पर्यन्तस्वरूपे गीर्वाणवाणि-सरस्वति भुवनाऽऽ-भरणम्-जगदलंकारस्वरूपम् , जगत्याः-त्रिलोक्याः , शरणम् - रक्षकम् , भवत्याः-तव , दयार्द्रचरणम्-दयासिक्त पदम् वन्दे अहमिति शेषः ।

हे पूर्णचन्द्र के सदृश सुन्दर मुख वाली, ! प्रतिभा से विभूषित ! मनीषियों की वाणी के लक्ष्यभूत ! सारस्वत ! संसार को अलंकृत करने वाले , जगत् के रक्षक , दयासिक्त , आप के चरणों की मैं वन्दना करता हूँ ।

2 नाऽऽलोक्यते क्वचन सत्प्रतिभाप्रकाशो, भासोऽथवाऽमरमणिः कविकालिदासः ।
तन्मे पुनर्जननि ! सर्जनमर्जयन्ती, किम्मन्यसे न भविता कविता-विलासः ॥

ज्यो०-सती चासौ प्रतिभा सत्प्रतिभा-तस्याः प्रकाशो वर्तते यस्मिन् सः सत्प्रतिभाप्रकाशः - सत्प्रतिभावान् , महाकविः भासः, अथवा अमरमणिः-अमराणाम् यशः शरीराणाम् मणिः-अग्रणी , कविकालिदासः - महाकविः कालिदासः यतः क्वचन-कुत्रापि , नालो-क्यते-नदृश्यते इदानीमितिशेषः , तत्-तस्मात् जननि-मातः ? मे-मम श्रीशकवेरित्यर्थः, सर्जनम्-सृष्टिम् , अर्जयन्ती-कुर्वन्तिपुनः-भूय, कवितायाः

विलासः, न नहि, भविता इति मन्यसे किम् ?

चूंकि इस समय सत्प्रतिभासम्पन्न कवि भास, अथवा यशः शरीरों में श्रेष्ठ महाकवि कालिदास कहीं नहीं दिखाई पड़ते अतएव हे माँ आप यह मानने लग गयी हैं क्या, कि अब पुनः कभी कविता का विलास नहीं होगा ?

केषाञ्चिदस्तु कमला कमलाऽऽयताक्षी; केषाञ्चन शम्भुमुखीसुमुखीषु मान्या ।
अस्मत्कृते तु जननी जननि ! त्वमेका, यत्पाययेः शम-करं मकरन्दबिन्दुम् ॥

ज्यो०- केषाञ्चित्-धनार्थिनाम्, कमलायताक्षी-कमलदलमिव विस्तृतनयना कमला-लक्ष्मीः, अस्तु-भवतु भवतीतिशेषः, केषाञ्च-शंकराराधनपरायणानाम्, सुमुखीषु-सुन्दरीषु, मान्या-माननीया शम्भुमुखा-पार्वती भवती भवतादित्यर्थः । मातः- हे जननि, अस्मत्कृते-मह्यम्, त्वम्-भवती, एका-केवलम्, जननी-माता असि यत् शमकरम् शमम्-शान्तिं करोति योऽसौ तम्, मकरन्दबिन्दुम्-पुष्परागविप्रुषम्, पाययेः - पानं कारयेः ॥३॥

मां सरस्वति ! आप धनार्थियों के लिए लक्ष्मी तथा शिव भक्तों के लिए पार्वती हैं, किन्तु मेरे लिए तो आप एक मात्र शान्ति प्रद मकरन्दपान कराने वाली माँ हैं ॥३॥

तान् कल्पना-गत-कलाः सकला व्रजन्ति, भावा गुणेन सहिता अपि तान् यान्ति ।
दासोपमा नव-रसा अपि तान् भजन्ति, सर्वं विहाय भवतीं भुवि ये यजन्ति ॥

ज्यो०- ये जनाः भुवि-लोके, सर्वम्, विहाय-त्यक्त्वा भवतीम्-त्वाम्, यजन्ति-पूजयन्ति, तान्-जनान् प्रति सकलाः-सम्पूर्णाः कल्पनागतकलाः-कल्पनासम्बन्धि कलाः, व्रजन्ति-गच्छन्ति, उ-निश्चयेन, तान्-जनान्, गुणेन-शीलादिना, सहिताः-युक्ता भावाः विचारा अपि तान् - जनान् यन्ति-यान्ति । किञ्च तान् नवरसाः-नव संख्याका रसाः नवीना भावा वा, दासोपमाः-सेवकसदृशाः भजन्ति-सेवन्ते ।

हे माँ सरस्वति ! जो लोग सब कुछ त्यागकर आपकी ही सेवा करते है, उन्हें कल्पना की सारी कलाएं, शील आदि गुणों के साथ-साथ सभी प्रकार के भाव, तथा (काव्य प्रसिद्ध नवो रस अथवा नवीन-नवीन विचार ये सभी प्राप्त हो जाते हैं।

५ द्वेधा कथं कथय ते कृपया। कृपा यत् मेधाविनामनुपमो विहितः स वेधाः
प्रातःस्तवम्प्रकुरुतेऽनुदिनानि मौतः ? जातः कथं न शिशुरेष तवाङ्कतातः

हे मातः-सरस्वति ! ते-तव, कृपा-दया, द्वेधा-द्विप्रकारवती, कथम्-केनप्रकारेण अभूत् ? यत्-यस्मात्, ते-तव, कृपया-दयया सः-प्रसिद्धः, वेधाः-ब्रह्मा, मेधाविनाम्-ज्ञानिनाम्, अनुपमः-अग्रगण्यः विहितः-कृतः। एषः-अयम्, शिशुः-बाल, तव अनुदिनानि-प्रतिदिनम्, प्रातः-प्रातः काले स्तवम्-स्तुतिम्, प्रकुरुते, तथापि तवाङ्कतातः-तवक्रोडशिशुः कथम्-कस्मात् न जातः-नहि अभूत्।

माँ ! आपकी यह कृपा दो प्रकार की कैसे हो गयी ? आपकी कृपा के प्रभाव से ब्रह्मा बुद्धिमानों में श्रेष्ठ हो गये और यह (कवि)बालक प्रतिदिन प्रातःकाल आपकी स्तुति करता है फिर भी आपकी गोद का बालक कैसे नहीं बन सका ?

६ यद्यप्यहं कृत-परश्शत-पाप-पीनः, मातस्तथापि शिशुरस्मि नु तावकीनः।
तन्मे कृपां कुरुकृपामयि ? यदुल्लसदभा, मद्भारती भवतु भारत भूमि-भूषा ॥

मातः-सरस्वति ! यद्यपि, अहम्-कविः, कृतपरश्शतपापपीनः-कृतः-विहितैः, परश्शतः-अनेकैः पापैः पीनः पुष्टोऽस्मि, तथापि नु-निश्चयेन' तावकोनः-भवत्याः,-शिशुः-पुत्रोऽस्मि (नजातु माता सागसमपि स्वकीय पुत्रं जहाति।) तत्-तस्मात्, कृपामयि-करुणमयि, मे-मयि, कृपाम्-दयाम् कुरु-विधेहि,-यत्-येन, लसद्भा-कान्तिभासुरा, मद्भारती-ममवाणी भारतभूमिभूषा-भारतभूगोऽलंकारस्वरूपा भवतु।

मातः ! यद्यपि मैंने असंख्य पाप किया है, फिर भी आप

का पुत्र हूँ, अतएव हे कृपामयि आप मुझपर कृपा करें, जिससे कान्तिभासुर मेरी वाणी भारत भूमि का अलंकार बन जाय।

6 स्मृत्वा स्थलाम्बुरुह. कोरक कोमलाङ्गीं, तेजोमयीं कनकचम्पकगुच्छगौरीम्
यातोऽस्मि कामपि दशां विषमां यथाऽहं सम्मोहितोऽस्मि जडितोऽस्म्यपराकृतोऽस्मि

स्थलाम्बुरुहस्य-स्थलकमलस्य कोरकम्-कुड्मलम् इव कोम, लाम्-मृद्वीं, कनकचम्पकस्य-स्वर्णचम्पकस्य गुच्छम्-स्तबकमिव गौरवर्णाम् किञ्च तेजोमयीम्-त्वाम्-भवतीम् स्मृत्वा अहम्, कामपि अवर्णनीयाम्, विषमाम्-विलक्षणाम् दशाम् यातोऽस्मि, यया-दशया, अहम् सम्मोहितः-मुग्धोऽस्मि जडितः-जडतांगतोऽस्मि, किञ्च अपरीकृतः-अन्यतांगत इत्यर्थः।

स्थल कमल की कली के समान कोमल, स्वर्ण चम्पा के समान गौर वर्ण वाली तथा तेजोमयी आप स्मरण करके मेरी एक अवर्णनीय विलक्षण दशा हो गयी है, जिससे मोहित होकर मैं जड़ तथा अपने से भिन्न सा हो गया हूँ।

पीयूषिणां विषवताञ्च मदाञ्चितानां श्यामारुणोज्ज्वलतया समलङ्कृतानाम्
लीलावतामलसपक्ष्मललोचनानां मातः? भविष्यति कदा मयि पक्षपातः॥

मातः-सरस्वति, पीयूषिणाम्-अमृतमयानाम्, विषवताम्-विषसहितानाम्, मदाञ्चितानाम्-मदपूर्णानाम् च, श्यामञ्चारुणञ्च उज्ज्वलञ्च श्यामारुणोज्ज्वलानि तेषां भावस्तया-श्यामारुणोज्ज्वलतया-श्वेतश्यामरक्तताद्वारा समलंकृतानाम्-सुशोभितानाम्, लीलावताम्-विविधभावसमन्वितानाम्, अलसानि पक्ष्मलानि च तानि लोचनानि-नेत्राणि तेषाम् पक्षपातः-कटाक्षपातः मयि-कृपाविषये, कदा भविष्यति।

मां अमृत, विष तथा मदभरे, श्वेत श्याम एवं रतनार विविध भाव समलंकृत अधखुले तथा भ्रू समलंकृत आपके नेत्रों का कृपा-पात्र मैं कब बनूँगा?

९ नीहार-सार-शिशिरं श्वसितं त्वदीयं तन्मन्द-मन्द-मधुरं हसितं त्वदीयम्
तद्दुग्ध मुग्ध-वदनं सदनं सुखानां लब्धा स्तनन्धयशिशुर्नु कदा वदाऽम्ब ।

अम्ब-हे मातः, वद-कथय, स्तनन्धयशिशुः-दुग्धमुखोबालः, नीहारस्य-तुहिनस्य, सारवत् शिशिरम्-शीतलम् त्वदीयम्-भवदीयम् श्वसितम्-निःश्वसितम्. तत् प्रसिद्धम्, मन्द-मन्दं यथा स्यात् तथा मधुरम्-त्वदीयम्-भवत्याः हसितम्-हासः. किञ्च सुखानामानन्दनाम्. सदनम्-आश्रयभूतम्. तत् दुग्धवत् मुग्धं-मनोहरम् वदनम्, कदा-कस्मिन् समये: 'नु' इति वितर्के, लब्धा-लप्स्यते इत्यर्थः ।

हे मातः ! आप बतलाएँ कि आपका यह दूधमुहाँ शिशु, आपके बर्फ के समान ठंडे श्वास, मन्द-मन्द मुसकान, तथा दुग्ध के समान मनोहर मुख का दर्शन कब प्राप्त कर सकेगा ?

१० मातर्निसर्गशशिशीतल-शुक्ति-शुक्ले ? मन्मुग्ध-मानस-मनोहर-राजहंसि ।
लावण्य-लालसित-लोचनलोल-लक्ष्मीं द्रक्ष्यामि भारति ? कदा तव मञ्जुमूर्तिम्

निसर्गतः-स्वभावत एव शशिवत्, शीतला या शुक्तिः तद्वत् शुक्ला तत्सम्बुद्धौ-निसर्गशशिशीतलशुक्तिशुक्ले ! तव मुग्धो मानस एव मानसरोवरइत्यर्थः तस्य मनोहरा मनोज्ञा राजहंसी तत्सम्बुद्धौ -मन्मुग्धमानसमनोहरराजहंसि ! मातः-भारति सरस्वति लावण्येन -सौन्दर्येण पुनः पुनः अतिशयेन वा लालसिता लोचनानाम् लोकस्य या लक्ष्मीस्ताम्-लावण्यलालसितलोचनलोकलक्ष्मीं, तव-भवत्याः मञ्जुमूर्तिम्-मनोज्ञविग्रहम् कदा द्रक्ष्यामि ? अवलोकयिष्ये ।

हे स्वभावतः चन्द्रमा के सदृश शीतल शुक्ति के समान वर्णवाली, तथा मेरे मनोहर मानस रूपी मानसरोवर की राजहंसी मातः सरस्वति ! आपके सौन्दर्यातिरेक के कारण लोचन लोक की लक्ष्मी के समान आपकी मनोज्ञमूर्ति का मैं कब दर्शन कर पाऊँगा

११ सञ्चार-चारु-चिकुराञ्चितमाननन्ते, विस्मारितेऽपि नहि विस्मृतिमेति मातः
संवीक्ष्य यद्विचरतां गगनेऽपि चन्द्रो, मन्दोऽभवत्सकलया कलयाऽन्वितोऽपि ।

हे मातः ते-तव, सञ्चारेण चारुः-मनोहरः यः चिकुरः केशः तेन अञ्चितम्-सुशोभितम् आननम्-मुखम्, विस्मारितेऽपि-विस्मृतिं प्रापितेपि विस्मृतिं विस्मरणम् नहि एति-गच्छतिः यद्रुचिरताम्-यस्यशोभाम्, संवीक्ष्य-दृष्ट्वा गगने-आकाशे, सकलया -सम्पूर्णया, कलया अन्वितोपि-युक्तोऽपि, चन्द्रः-शशिः, मन्दोऽभवत् -निष्प्रभोऽभूत् ।

माँ मन्द-मन्द हिलते हुए मनोहर केशों से सुशोभित आपका मुख भूलाने पर भी नहीं भूलता । आपके मुख की शोभा ही देखकर सभी कालाओं से युक्त अकाशस्थ चन्द्रम फीका पड़ गया ।

१२ मन्ये न ते प्रभविताऽस्मि निवद्धवेणी-श्रेणीभरे विकच-कोकनदः कदापि
किंतेन मञ्जुतम-मञ्जिमनूपुरेऽपि, प्राप्स्यामि किन्नहि पदं कलशिञ्जितानाम्

अहम् ते-तव निबद्धाचासौ वेणी तस्याः, श्रेणीभरे-पंक्तौ विकचकोकनदः-विकसित कमलं न प्रभवितास्मि-भवितुं नाहं इति मन्ये । तेन किम् मञ्जुतमञ्चेदं मञ्जिमत् नूपुरम्-मञ्जुतममञ्जिम नूपरम् तत्र मञ्जुतममञ्जिमनूपुरे-मनोज्ञतमे रञ्जिते च, नूपुरे, अहम् कलशिञ्जितानाम्-मनोहरध्वनीनां पदं-स्थानं अपि नहि प्राप्स्यामि-लप्स्ये इत्यर्थः ।

माँ मानता हूँ कि मैं आपकी कबरी की पंक्ति में विकसित कमल नहीं वन सकता, किन्तु क्या मैं इसी से आपके मनोहर नूपुरों की मधुर ध्वनि का भी स्थान नहीं पा सकता हूँ ?

भाषा स्वभाव-सरसा त्वमहं प्रसङ्गः, मन्दाकिनी मधुमयी त्वमहं तरङ्गः
मन्दारवालकलिका त्वमहं तदङ्ग; ज्योतिर्मयी विजयसे त्वमहं पतङ्गः ॥

हे मातः त्वम् स्वभावसरसा-स्वभावतः कोमला भाषा आसीति सर्वत्रपूरणीयम् अहं च प्रसङ्गः, त्वम्-मधुमयी-माधुर्यवती मन्दाकिनी-वियद्गङ्गा असि अहं च तस्याः तरङ्गः-वीचिः, त्वम्-

मन्दारस्य-कल्पवृक्षस्य, बालकलिका असि, अहं तु तदङ्गः-तस्याः कलिकायाः अङ्गः-अवयवोऽस्मि किञ्च त्वम् ज्योतिर्मयी-प्रकाश स्वरूपा सती विजयसे, अहम् तदुपर्यासक्तः पतङ्गः शलभोऽस्मि ।

माँ तुम स्वभावतः कोमल भाषा हो और मैं उसका प्रसङ्ग हूं, तुम तो मधुर स्वर्गङ्गा हो और मैं उसका तरङ्ग हूं. तुम कल्पवृक्ष की बाल कालिका हो और मैं उसका एक अवयव हूं, तथा तुम प्रकाश स्वरूप हो और मैं उस पर आसक्त एक पतङ्ग हू

१६ पूर्णाऽसि वाणि ? रजनी त्वमहं शशाङ्कः; विद्युच्छटाऽसि तदहं सजलो घनाङ्कः
कस्तूरिकात्वमसि चेत्तदहं मृगाङ्कः, त्वं याऽसि साऽसि परमेष शिशुस्तवाङ्कः

वाणि-हे सरस्वति, त्वम् पूर्णा रजनी असि-पूर्णिमाया रात्रिरसि अहम् (कविः) तु शशाङ्कः-चन्द्राऽस्मि चेत् त्वम् विद्युतः छटा-शोभाऽसि तदा अहम् सजलः-जलपूर्णः, घनाङ्कः-मेघोऽस्मि, चेत् यदि त्वम् कस्तूरिका-मृगमदोऽसि तदा अहम् मृगाङ्कः-मृगक्रोडोऽस्मि, हे मातः त्वम् याऽसि साऽसि परम्-किन्तु एषः-कविः तु तव-भवत्याः, अङ्कस्य क्रोडस्य शिशुः बालोऽस्ति ।

हे सरस्वति ! आप यदि पूर्णमा की रात्रि हो तो मैं चन्द्र हुं, यदि तुम विद्युत् की छटा हो तो मैं जल भरा मेघ हूं यदि आप कस्तूरी है तो मैं मृग की नाभि हूं। माँ आप जो हों यह कवि तो आपकी गोद का बालक ही है।

१७ चेच्चन्द्रिकाऽसि तदहं चटुलश्चकोरः. चेत्त्वं नवाम्बुदघटा तदहं मयूरः।
कल्याणि! कल्पलतिकाऽसि तदाऽस्मि; रेणोरन्वेषणातुर-तरोरस-रञ्जनोऽहम्

हे कल्याणि ! त्वम् चेत् यदि, चन्द्रिका-ज्योत्स्ना असि तत् अहम् चटुलः-चपलः, चकोरोऽस्मि । चेत् त्वम् नवानाम्-नवीनानाम् अम्बुदानाम्-मेघानाम् घटा असि तत् अहम् तस्य प्रणयी मयूरः अस्मि । यदि त्वम् कल्पलातिका-देववृक्षवल्लरी असि तदा अहम् तस्याः रेणोः-परागस्य अन्वेषणे आतुरतरः-अत्यन्तव्याकुलः रस-

रञ्जनः-रसिकोऽस्मि ।

हे कल्याणि सरस्वती ! यदि आप चांदनी हैं तो मैं चंचल चकोर हूं, यदि आप नवीन मेघ की घटा हैं तो मैं उसका प्रणयी मयूर हूं, यदि आप कल्पवृक्ष की लता हैं तो मैं उसके मकरन्द के अन्वेषण में व्याकुल रसिक हूं ।

१६ भूयो निनादय, निनादय वाणि वीणां, चञ्चच्चराचरविमोहविधौ प्रवीणाम् ।
यन्निस्सरत्स्वरसुधा-रसपान-मत्तो भूयात्तवायमजरः शिशुरीशदत्तः ।

वाणि ! हे सरस्वति भूयः-पुनः चञ्चताम्-दीप्तिमतां, चराचराणाम्-जड़जङ्गमानाम्, विमोहनस्य विधौ प्रवीणाम्-कुशलाम् वीणाँ-वल्लकीं, निनादय-वादय आदरातिशय द्योतनाय वीप्सा । यस्याः निस्सरन्ती-आविर्भवन्ती, स्वरसुधायाः-स्वरामृतस्य पानेन-आस्वादनेन, मत्तः-प्रमत्तः तव-भवत्याः, अयम् शिशुः-बालः ईशदत्तः अजरः-जरारहितः भूयात् ।

माँ इस चराचर जगत् को मोहित करने में समर्थ आप अपनी वीणा अवश्य बजायें जिसके स्वरामृत के रसपान में मुग्ध यह कवि ईशदत्त जरा रहित हो जाय ।

## लेखनीं प्रति

१७ अयि लेखनि ! लिख्यतां तथा, वरवीरस्य यथा-यथा कथा ।
क्रियतां च तथा विचारणा, प्रभवेदद्य यया सुधारणा ॥

अयि लेखनि-अयि तूलिके: वरवीरस्य-श्रेष्ठवीरस्य महाराणा प्रतापस्य कथा-वृतान्तम् यथा-यथा-यादृशी वर्तते इतिशेषः तथा-तेन प्रकारेण, विचारणा-विचारः क्रियतां-कुरु यया-विचारणया अद्य-सम्प्रति, सुधारणा-सद्विचारः, प्रभवेत्-उत्पद्येत ।

ऐ तूलिके श्रेष्ठ वीर महाराणा प्रताप की जैसी कथा है उसी तरह से लिखो तथा उस तरह के विचारों को उत्पन्न करो

जिससे आज सद्विचार उत्पन्न हों।

18 प्रभवेर्न मृषा विलेखने क्वचनाऽपि प्रबले! मम प्रिये
न च हिन्दुमताभिघातिनी, यवनानां न च पक्षपातिनी॥

हे मम प्रिय प्रबले तूलिके क्वचनापि-कुत्रापि, मृषा-मिथ्या, विलेखने-समुल्लेखने, न प्रभवेः-समर्था भूयाः, न च-न वा हिन्दूनां यद्धिमतम् तस्य-अभिघातिनी-पक्षपातकारिणी भूयाः।

ये मेरी प्रिये तथा प्रबल तूलिके तुम कहीं मृषा न लिखना न तो हिन्दु मत का विरोध करना और न तो कहीं यवनों का पक्षपात करना।

19 कथमेतदलम्प्रभा-रतं; भुवनेऽभूदधुना प्रभा-हतम्।
कवि-कल्पलते! विलिख्यतामिति सर्वं सुविविच्य निर्भयम्॥

हे कल्पलतिके-तूलिके, अलम्प्रभारतं पूर्ण-कान्तिभासुरम् एतद्-भारतवर्षम्, अधुना-सम्प्रति, भुवने लोके प्रभाहतम्-निष्प्रभम्, कथम्-कस्मात् कारणात्, अभूत्-जातम् इति सर्वम्-संपूर्णम् विविच्य-सविवेकम्, निर्भयम् विलिख्यताम्-समुट्टंकनं कुरु।

ये कवियों के लिये कल्पलता तुल्य तूलिके! पूर्ण प्रभा से देदीप्यमान यह भारत संसार में निष्प्रभ क्यों हो गया, इस बात को निर्भय होकर विवेकपूर्वक लिखो।

## चर्चा समीचणाम्

20 न या स्वकीयं विजहाति भारतं, मदानने नृत्यति चाप्यनारतम्।
सरस्वती सा जननीव मद्वचः कथं न कुर्यात् प्रतिभा-प्रभारतम्॥

या-सरस्वती देवी, स्वकीयम्-आत्मनीनम् भारतम्-भारतवर्षम् कदापि न विजहाति-त्यजति, च-किञ्च, अनारतम्-सततम्, मदानने-ममुखे, नृत्यति-विराजते, सा-सरस्वती, जननीव-माता-इव, प्रतिभायाः-नवनवोन्मेषशालिन्या बुद्धेः प्रभया-कान्त्या रतम्

मनोज्ञम्, मद्वचः-मम वाणीम् कथम् न कुर्यात् ? अवश्यमेव कुर्यादित्यर्थः ।

जो सरस्वती देवी अपने इस भारतवर्ष का कभी त्याग नही करती हैं तथा मेरे मुख में सदा निवास करती हैं, वे माता के समान मेरी वाणी को बुद्धि वैभव सम्पन्न क्यों नही करेंगी ? अर्थात् अवश्य करेंगी ।

२१ भणच्चलच्चित्रपटप्रिये जने, वृथा यथा शास्त्र-पुराण-जल्पना ।
तथाद्ययूनां निवहे-प्रभाहते, वृथाऽस्मदीया रण-कीर्ति कल्पना ॥

यथा-येन प्रकारेण भणंश्चलंश्चासौ चित्रपटो भणच्चलच्चित्रपटः स एव प्रियो यस्यासौ तत्र भणच्चलच्चित्रपटप्रिये--चलचित्रप्रेक्षणप्रिये जने यथा-येनप्रकारेण, शास्त्राणाम् पुराणानाञ्च जल्पना-प्रवचनम् वृथा-अकिञ्चित्करम् भवति । तथा-तथैव, अद्य-सम्प्रति प्रभाहते-निष्प्रभे, यूनां-युवकानाम्, निवहे-समुदाये, अस्मदीया-मामकीना, रणकीर्तिकल्पना-संग्रामयशस्कल्पना वृथैव ।

जिस तरह सिनेमा के प्रेमी पुरुष के समक्ष शास्त्रों तथा पुराणों के उपदेश व्यर्थ होते हैं, उसी तरह आज निष्प्रभ युवक समाज में मेरी रणकीर्ति की कल्पना भी व्यर्थ ही हैं ।

प्रताप सिंहस्य तथाऽपि वर्णना, मया यथाशक्ति स-भक्तिचित्रिता ।
पवित्रिता भारतभूरियं यया पवित्रयिष्यत्यथ किन्न साऽद्य माम् ॥

तथापि-अथापि, मया-कविना यथाशक्ति-शक्त्यनुसारम् सभक्ति-भक्तिपूर्वकम् . प्रतापसिंहस्य, वर्णना-कथा, चित्रिता-वर्णिता, यया-वर्णनया, इयं भारतभूः-भारतस्य भूमिः, पवित्रिता-पावनीकृता सा-वर्णना, अद्य माम्-कविम् न-नहि पवित्रयिष्यति-पावयिष्यति किम् ?

फिर भी मैंने अपनी शक्ति के अनुसार भक्ति पूर्वक प्रताप-सिंह का वर्णन किया है । जिस वर्णना ने इस भारत भूमि को पवित्र किया है क्या वह आज मुझे नहीं पवित्र कर पायेगी ?

२८ न यस्य देशे; रतिरस्त्यनुत्तमा न वा स्वधर्मव्यथयाऽकुलम्मनः ।
न तत्कृतेऽसौ सफलो मम श्रमः, किमस्ति-मिष्टं कपये पयः क्वचित् ॥

यस्य-पुरुषस्य, देशे-स्वदेशे भारतवर्षे इत्यर्थः. अनुत्तमा-श्रेष्ठा रतिः-स्नेहः, नास्ति, वा-अथवा यस्य मनः-अन्तःकरणम्, स्वधर्मस्य व्यथया-वेदनया, व्याकुलं नास्ति तत्कृते-तस्मै असौ मम श्रमः-प्रयासः सफलो न-नास्ति । कपये-वानराय क्वचित्-कुत्रापि पयः-दुग्धम् मिष्टम् भवति किम् ? नहि एव भवति ।

जिस व्यक्तिकी अपने देश में सर्वोत्तम भक्ति नहीं है अथवा जिसका मन अपने धर्म की व्यथा से व्याकुल नहीं है, उसके लिये मेरा यह प्रयास व्यर्थ है। क्या कहीं बन्दर को दूध मीठा लगता है ? कहीं नहीं ।

२९ अलङ्कृतिर्नैव रसो गुणोऽथवा न रीतिरत्रास्ति तथाप्यसौ कृतिः ।
न कस्य मोदं वितनोत्यदूषणा विभूषणाऽप्यङ्क-गता वधूरिव ॥

अत्र-अस्यां वर्णनायाम् । अलङ्कृतिः-अलंकारः (उपमादिकः) नैव-नास्त्येव अथवा रसः-काव्यात्मभूतः वा रीतिः-वैदर्भ्यादिका वा गुणः-प्रसादादिको न-नास्ति' तथापि-इत्थं भूतापि अदूषणा-दोषरहिता इयं कृतिः-रचना विभूषणाऽपि-अनलंकृताऽपि अङ्कगता-रसेन क्रोडं स्वयमभ्युपागता वधूरिव-नवाङ्गना इव कस्य सहृदयस्य मोदम्-आनन्दम् न-नहि विस्तारयति ?

यद्यपि इस रचना में अलंकार, रस, गुण तथा रीति का अभाव है फिर भी यह निर्दोष कविता क्रोडऽस्थित नवीन वधू के समान किस सहृदय के आनन्द को नहीं बढ़ायेगी ? '

३० मनोजमूर्च्छन्मदिरा मदालसा मनोज्ञ-'हाला'-रसपानलालसाः ।
पठन्तु वा नैव पठन्तु का क्षतिः वृथैव तेषां न विधीयते नतिः ॥

मनोजवत्-कामवत् मूर्छन्त्याः, मोहयन्त्याः, मदिरायाः-मद्यस्य, मदेन-अलसाः-आलस्ययुक्तत्वात् किमपि कर्तुमप्रभवन्तः मनोज्ञायाः

-मनोहारिण्याः, हालयाः-मदिरायाः रसस्य पानस्यलालसा अभिलाषा वर्तते येषां ते मनोज्ञहालारसपानलालसाः इमाम्-रचनां पठन्तु नवा पठन्तु का क्षतिः-नाणाहीयते किञ्चित् अतएव वृथैव-मुधैव तेषाम् मदिरापानेन नष्टश्रीकाणाम् नतिः-नमस्कारः न विधीयते-नक्रियते इत्यर्थः ।

जिनकी लालसा काम के समान मोहित करने वाली मदिरा पान के लिए बनी हुई है अथवा जो चेतना शून्य बना देने वाली 'हाला' के रसपान मे अलसाये हुए हैं' वे इस रचना को पढ़े या न पढ़ें इससे मेरी क्या क्षति है ? अतएव मैं व्यर्थ ही उनको नमस्कार भी नहीं करता हूँ !

उपक्रमक्रमः

व्यनक्ति लोके महिमाऽऽलयः सदा, यदीय लोकोत्तरता हिमालयः ।
स राजते भारत-भूतलाञ्चले विराजते भारतवर्षनामभाक् ।

महिम्नाम्-ऐश्वर्याणाम् आलयः-आकरः-हिमालयो यदीयलोकोत्तरताम्-यस्य लोकश्रेष्ठाताम् लोके-जगति' सदा-सततं व्यनक्ति -अभिव्यञ्जयति. सः-देशः' भारतवर्षनामभाक्-भारतवर्षनामकः राजते-शोभते भारतस्य ज्ञाननिष्ठस्य भूतलस्य अञ्चले प्रदेशे विराजते विद्यमानोऽस्ति ।

महामहिमा सम्पन्न हिमालय जिसकी सर्वश्रेष्ठता को संसार में प्रख्यापित करता है, वह भारतवर्ष नाम का देश ज्ञाननिष्ठ भूभाग में विद्यमान है ।

सदैव गंगा-यमुना-सरस्वती-नदी-तरंगाऽऽकुलितो महामहाः ।
जगत्त्रयेश-प्रिय-वेषवान् हि यः स एष देशः किल कस्य न प्रियः

यो हि महामहाः-महैश्वर्यसम्पन्नः भारतवर्षः-गङ्गा-यमुना सरस्वतीत्याख्यनां नदीनाँ-स्रोतस्विनीनाँ तरङ्गैः-वीचिभिः' लुलितः -क्षालितपादपद्मो हि निश्चयेन, यः भारतः जगत्त्रयेशस्य-

विष्णोः प्रियवेशवान्-प्रियरूपवान्-वर्तते स एव किल देशःकस्य जीवस्य प्रियो-अभिमतो न भविष्यति ? सर्वस्यैव प्रियोभविष्यतीत्यर्थः ।

महा वैभवशाली जिस देश के पादपद्मों को गङ्गा-यमुना और सरस्वती आदि नदियाँ पखारती हैं तथा जो भगवान् विष्णु को प्रिय वेष वाला है, वह देश किसको नहीं प्रिय होगा ? अर्थात् सबको होगा ।

२९ कृपाण-कुन्तादिकशस्त्र-झङ्कृता, सदैव वीरोचितहुङ्कृताऽङ्किता
प्रताडिताऽराति-ततिस्तदङ्कगा विभाति मेवाड़ मही महीयसी

कृपाणकुन्तादिकैः-असिभल्लप्रभृतिभिः शस्त्रैः झङ्कृता-झङ्कारवती सदैव-सर्वदैव वीरोचिताभिः-वीरानुकूलाभिः हुंकृतिभिः-हुंकारैः अङ्किता-परिपूर्णा । प्रताडिता-पराकृता, अरातीनाम्-शत्रूणाम् ततिः समूहो यत्र सा' महीयसी-महैश्वर्यवती, मेवाड़स्य मही-भूमिः, तदङ्कगा-तस्य उपर्युक्तेषु श्लोकेषुप्रोक्तैश्वर्यसम्पन्नस्य भारतवर्षस्य, अङ्कगा-क्रोडस्था सती विभाति-राराजते ।

तलवार भाला आदि शस्त्रों की ध्वनि से झंकृत वीरोचित हुंकारों से सदा परिपूर्ण, समागत शत्रुओं को परास्त करने वाली मेवाड़ भूमि इस भारत की गोद में सुशोभित हो रही है ।

३० दुरन्त 'मोहम्मद' मोहमर्दनं पुरा पुरारातिमयी चकार या
चित्तोड़नाम्नी किल तत्र वर्तते पुरी सुवीरोरुज-वृन्द-वन्दिता

तत्र-मेवाड़भूमौ, सुवीराणाम्-धैर्यवतां वीराणाम् ऊरुजानाम् च-वैश्यानाञ्च वृन्देन-समूहेन वन्दिता-संस्तुता चितोड़ नाम्नी पुरी नगरी वर्तते, पुरारातिमयी-शङ्करस्वरूपा या-नगरी, पुरा-प्राचीने काले. दुरन्तानाम्-दुर्मदानाम् मोहम्मदानाम्-यवनानाम् मोहस्य-गर्वस्य मर्दनम्-नाशम्, चकार-अकार्षीत् ।

वीरों तथा वैश्यों के समूह से वन्दित उस मेवाड़ भूमि में

'चित्तौड़' नाम की नगरी है, शंकर स्वरूपा जिस नगरी ने यवनों के मद का मर्दन किया।

इहैव वध्वो युगपत्सहस्रशः सुकोमला हा कलिकाऽङ्कुरादपि
स्वधर्म-संरक्षण-हेतवे तनुं, विदग्धवत्यो ज्वलने तृणोपमाः

हा ! विषादस्यायं विषयो वर्तते यत्, इहैव-'चित्तौड़' नगर्यामेव, कलिकानाम्-कुड्मलानाम् अंकुरादपि सुकोमलाः-मृद्व्यः तृणोपमाः-तृणवत् सहस्रशः-अनेकाः वध्व्यः-कुलाङ्गनाः युगपत् -समकालमेव, स्वधर्मस्य-हिन्दुत्वस्य पातिव्रत्यस्य च, संरक्षणहेतवे -संरक्षणाय, तनुम्-शरीरम्, ज्वलने-अग्नौ, विदग्धवत्यः-प्रज्वालितवत्यः अभूवन् ।

हाय ! जिस नगरी में कली से भी कोमल, हजारों कुलाङ्गनाओं ने अपने धर्म की रक्षा के लिए तृण के समान एक ही बार अपने शरीर को अग्नि में जला दिया।

'सिसोदिया' वंशवतां नृणामियं, महा-महाभारत-रंगभूरभूत्
विबोधयन्ती च विपक्षिणां क्षयं, समुच्छ्रिता-वैजय-वैजयन्तिका

इयम्-'चित्तौड़ भूमिः' सिसोदियाख्यवंशजानाम् नृणाम्-जनानाम्, महाभारतस्य-एतन्नाम्नः संग्रामस्य रङ्गभूः-रङ्गभूमिः महती चासौ महाभारतरङ्गभूः-महामहाभारतरङ्गभूः; अभूत्-किञ्च अस्याम् विपक्षिणाम्-शत्रूणाम् क्षयम्-नाशम्, विबोधयन्ती-प्रकाशयन्ती विजय एव वैजयः तस्य वैजयन्तिका-ध्वजा समुच्छ्रिता -दोधूयमाना अभूत्।

यह चित्तौड़ भूमि सिसोदिया वंश के लोगों की महान् महाभारत भूमि बनी। यहाँ शत्रुओं के नाश को अभिव्यक्त करती हुई विजय ध्वजा फहराई।

33 समेहि वीरोऽसि यदि त्वमन्यथा, विधेहि नूनं सहसा पलायनम् ।
सदा वदन्तीव जनान्समागतान् अहर्दिवं या गगनङ्गताऽभवत् ॥

या-विजयपताका, सदा-सर्वदा यदि त्वम् वीरोऽसि-भट्टोऽसि, तर्हि समेहि-आगच्छ अन्यथा-नोचेत् नूनम्-निश्चि, तम् पलायनं विधेहि-पलायस्व, इति समागतान्-यांद्धुमागतान् जनान्-शत्रून्-अहर्दिवं-अहोरात्रम् वदन्तीव गगनंगता अभवत्-आकाशमचूम्बत् ।

यदि तुम वीर हो तो आओ अन्यथा भग जाओ, इस तरह से रात दिन आये हुए शत्रुओं से कहती हुई जो विजय पताका आकाश तक पहुंच गयी ।

38 गता न या सप्तशताब्दकावधिं, प्रतापिनीत्वात् परिपन्थिवश्यताम् ।
इयं पुरी सैव महामनस्विनी, ध्वजावती, तच्छिरसा नमस्यताम् ॥

या-चित्तौड़भूमि:, प्रतापिनीत्वात् ऐश्वर्यवतीत्वात् सप्तशताब्दकावधि-सप्तशताब्दि यावत्, परिपन्थिवश्यताम्-शत्रुपरतन्त्रताम् न गता- नहि प्राप्ता. तत्-तस्मात् सा एव-नगरी. महामनस्विनी-अत्यधिकात्माभिमानिनी ध्वजावती-द्युलोकपर्यन्तोधूतदयमानविजयपताकावती इयम्-पुरी-नगरी, शिरसा-मूर्ध्ना, नमस्यताम्-प्रणम्यताम् ।

जो अपने प्रताप के कारण सात सौ वर्ष पर्यन्त शत्रुओं के अधीन नहीं हुई वह यह महा मनस्विनी विजय पताका से युक्त नगरी शिरसा प्रणम्य है ।

## प्रतापो-प्रतापः

39 अभूत्पुरा भारत-भा-विभासकः, स एकलिंगस्य सदङ्घ्रि युपासकः ।
महाबली दुर्गचितोर-शासकः, प्रतापसिंहः परताप-नाशकः ॥

पुरा-प्राचीने काले, महाबली-महाबलशाली, प्रतापसिंहः-एव-

न्नामकः,दुर्गश्चासौ-चित्तौरः दुर्गचित्तौरः तस्य शाशकः-प्रशासकः-दुर्ग चित्तौरशासकः। भारतभाविभासकः-भारतस्य भा-प्रभा, तस्या विभासकः-प्रकाशकः, एकलिङ्गस्य-शंकरस्य सदंघ्रेः-सच्चरणस्य, उपासकः-उपासिता परतापनाशकः-परपीड़ाविनाशकः अभूत्।

प्राचीन काल में भारत की महिमा को प्रकाशित करने वाले भगवान शंकर के चरण कमलों का उपासक, दूसरों के दुःख को दूर करने वाले चित्तौर दुर्ग के प्रशासक महाबली प्रताप सिंह हुए

25 अटाट्यमनो ह्यटवीषु सन्ततं, स्वतन्त्रतार्थी, सकलत्र-पुत्रकः।
अवाप दुखं नहि किं व्यथाऽऽकुलः, स वीरतायास्तनयो वरान्वितः॥

वीरतायाः शूरतायाः वरान्वितः-वरदानप्राप्तः, तनयः-पुत्रः, सकलत्रपुत्रकः-पत्नीपुत्रसहितः, स्वतन्त्रतार्थी-स्वतन्त्रताकांक्षी, व्यथाकुलः-वेदनाव्याकुलः, सः-महारा. प्रतापः, अटवीषु-विपिनेषु सन्ततम्-अनिशम्, अटाट्मानः-पर्यटमाणः, किन् दुःखम् नहि अवाप-प्राप्तवान्।

वे वरदान प्राप्त वीरता के पुत्र अपनी पत्नी तथा पुत्रों के साथ, स्वतन्त्रता प्राप्ति की कामना से जंगलों में सदा घूमते हुए किस दुख को नहीं पाये ? (बर्दाश्त किये)

26 अनाथ-नारीजन-शोक-शोचनः, गवां द्विजानां गलदश्रुमोचनः।
स एक एवाऽभवदार्य-रोचनः, समुल्लसल्लोहित-लोल-लोचनः॥

अनाथाश्च ते नारीजनाः तेषां शोकं शोचति-विचारयति अनाथनारी जन शोक शोचनः. गवाम्-धेनूनाम्, द्विजानाम्-ब्राह्मणानाञ्च, गलन्ति यानि अश्रूणि तेषां मोचनः-अपसारकः, समुल्लसंती-सुशोभमाने लोहिते-रक्ते, लोले-चञ्चले, लोचने-नेत्रे यस्य असौ समुल्लसल्लोहित लोललोचनः, आर्येभ्यो रोचते यः असौ-आर्य रोचनः; सः प्रताप सिंहः; एकएव -एकाकयेव अभवत्-अभूत्।

अनाथ नारियों के शोक से शोकाकुल होने वाले, गौ तथा ब्राह्मणों की आँसू को पोछने वाले, मनोहर लाल तथा चचंल नेत्रों वाले तथा आर्यजनों के प्रिय प्रताप सिंह अकेले हुए।

मुमोच कोपात्तरुणाऽरुणाधरः कच-प्रबन्धान् यवनी जनस्य यः ।
स हिन्दुना केन स-रक्तबिन्दुना, न लालनीयो जगदेकरत्नवत् ।

तरुणः-परिपुष्टःअरुणः-रक्तः अधरः-अधरोष्ठः यस्यासौ तरुणारुणाधरः, यः-प्रतापसिंहः कोपात्-क्रोधात् यवनीजनस्य-यवनानांपत्नीनां तासां पतीन् हत्वा कचप्रबन्धान्-कबरीबन्धान्, मुमोच सः-केन हिन्दुना रक्तबिन्दुना-शोणितविप्रुषा जगतः एकम्-प्रधानम् रत्नवत्-रत्नसदृश न लालनीयः-समादरणीयः ? समादरणीय एव ।

पुष्ट तथा लाल ओष्ठ वाले जिन्होंने यवन पत्नियों के केश बन्धन को ( उनके पतियों को मारकर) खोल दिया, वे किस हिन्दू के रक्त बिन्दु के द्वारा संसार के प्रधान रत्न के समान समादरणीय नहीं हुए।

विशालवक्षा अधिपाणि भासयन्, महाकरालं करवाल-कालकम् ।
इवेन्द्रवज्रः स महीध्रमण्डलान् जघान लोकेषु शठान् हठान्वितान् ।।

इन्द्रस्य-पाकशासनस्य वज्र -पविः-इन्द्रवज्रः महीध्राणाम्-पर्वतानाम् मण्डलान्-समूहान्, इव विशालवक्षाः-आयतोरस्कः सः अधिपाणि-हस्ते महाकरालम्-अत्यन्तभयंकरम् करवालः-असिरेव कालकम्-मृत्युम् इव भासयन्-प्रकाशयन् लोकेषु-हठान्वितान्-हठधर्मिणः शठान्-दुष्टान् यवनान् जघान-ममार ।

जैसे इन्द्र ने बज्र से पर्वत समूह को नष्ट किया उसी तरह विशाल बक्षस्थल वाले प्रताप सिंह ने अपने हाथ में काल के समान भयंकर तलवार लेकर दुष्टों का विनाश किया।

प्रसन्नचेता बलिनां धुरन्धरः, लसल्ललाटः परिणद्ध-कन्धरः ।
नवाब्जनेत्रः शरदिन्दुसुन्दरः स वेषतोऽभूद् भुवने पुरन्दरः ।

प्रसन्नचेता-प्रसन्नमना, बलिनाँ-बलशालिनाम्, धुरन्धरः-अग्रगण्यः, लसल्ललाटः-शोभमानभालः परिणद्धकन्धरः-परिपुष्टस्कन्धः नवाब्जनेत्रः-कमलसदृशनेत्रवान् शरदिन्दुसुन्दरः-शरत्कालीन-चन्द्रः इव मनोज्ञः, सः प्रतापसिंहः भुवने-लोके, वेषतः-वेषेण पुरन्दरः-इन्द्रः इव अभूत्-अभवत् ।

प्रसन्न मन वाले, बलवानों में श्रेष्ठ सुन्दर ललाट वाले, मोटी कन्धा वाले, कमल के समान नेत्र वाले तथा शरत्काल का चन्द्रमा के समान सुन्दर प्रताप सिंह वेष के द्वारा संसार में इन्द्र के समान हुए ।

अकिञ्चनैः कल्पतरुप्रभीकृतः, स्वयं विडौजा इति वीरवन्दितः ।
वृतोऽरिभिः काल इव स्वमानसे स कल्कि-कल्पः कलितः कलौ जनैः ।

सः अकिञ्चनैः-याचकैः कल्पतरुप्रभीकृतः-कल्पतरोः-प्रभयान्वितो सम्पादितः, अयं स्वयं बिडौजा-इन्द्र इति वीरैः वन्दितः-संस्तुतः किञ्च अरिभिः-शत्रुभिः स काल इव-मृत्यु सदृशः, स्वमानसे-स्वहृदये वृतः-मानितः इत्थं सः जनैः-प्रजाभिः कलौ-कलियुगे कल्कि-कल्पः-कल्क्यवतारधारी विष्णुरिव' कलितः-स्वीकृतोऽभूत् ।

प्रतापसिंह को निर्धन याचकों ने कल्पतरु की कान्ति से युक्त माना. वीरों ने 'ये स्वयं इन्द्र हैं' यह कहकर उनकी वन्दना की, शत्रुओं ने अपने मन में उन्हें काल के समान माना तथा प्रजाओं ने प्रताप सिंह को कलियुग में विष्णु का कल्कि अवतार माना ।

क्षणे क्षणे यस्य रणे रतिर्भवेत्, पदे पदे यो विनिपातयेदरीन् ।
तदद्य किं विस्मय-कारणं बुधाः ! गृहे-गृहे सम्प्रति चेत्स पूज्यते ।

हेबुधाः-हे विद्वान्सः, यस्य-प्रतापसिंहस्य, रतिः-अनुरागः

क्षणे क्षणे-प्रतिक्षणम् रणे-संग्रामे भवेत्, यः पदे पदे-प्रतिपदम् अरीन्-शत्रून्, विनिपातयेत्-पराजयेत् सः चेत्-प्रतापः सम्प्रति इदानीं गृहे गृहे-प्रतिगृहम् पूज्यते । तदत्र-विस्मयस्य-आश्चर्यस्य किम् कारणम् आस्ते ? नास्तिकिञ्चिदित्यर्थः ।

हे विद्वानों ! प्रतिक्षण युद्ध करने की अभिलाषा वाले पद पद पर शत्रुओं को परास्त करने वाले पुरुष प्रताप सिंह की इस समय यदि घर-घर में पूजा होती है तो इसमें आश्चर्य की कौन सी बात है !

स्व-वैरि-सैन्ये सहसा प्रवेशतः; स्ववेशतो भीमतमं तमो नयन् ।
प्रतापसिंहो निजसिंहनादतः, प्रकम्पयामास न कस्य मानसम् ।।

स्व वैरिसैन्ये स्वशत्रुसेनामध्ये, सहसा-अकस्मात्, प्रवेशतः -प्रवेशेन स्ववेशतः-स्वाकृतेश्च भीमतमम्-भयंकरम् तमः अन्धकारम् नयन्-उपस्थापयन् निजस्य-स्वस्य, सिंहनादेन-गर्जनेन द्वारा कस्य-शत्रोः,मानसम्-हृदयम्, नहिं प्रकम्पयामास -वेपयामास एव।

अकस्मात् शत्रु की सेना में प्रवेश करके अपनी आकृति के द्वारा घोर मोह पैदा करके इस प्रताप सिंह ने किस शत्रु के हृदय को नहीं कंपा दिया ?

बभूव लोकोत्तरभव्यभाग्यवान्; महामहीपो मुगलान्वये महान् ।
स राजराजैर्विहितप्रणामको, जगत्प्रसिद्धोऽकबरेति-नामकः ।।

## देश--दशा

मुगलान्वये-मुगलवंशे अकबरेति नामकः महान्-श्रेष्ठः जगत् -प्रसिद्धः-लोकविख्यातः लोकोत्तर भव्य भाग्यवान् लोकोत्तरं-लोकश्रेष्ठ । भाग्यम् सुन्दरम् भव्यम्-दैवंविद्यते यस्यासौ महामहीपः-महाराजः बभूव-अभूत् सः-अकबरः राजराजैः-सर्वराजभिः विहित-

प्रणामकः शिरसाभिवंदितः आसीत् ।

मुगलवंश में लोकोत्तरभाग्यवाले लोकप्रसिद्ध महाराज अकबर हुए जिन्हें सभी राजा प्रमाण करते थे ।

पितामहो यस्य महापराक्रमी; गुणेन नाम्ना च बभूव बर्बरः ।
विजित्य पानीपत-युद्धमत्र यः प्रसिद्धतामाप धराप-मण्डले ॥

यस्य अकबरस्य महापराक्रमी-महाबली पितामहः पितुः पिता, नाम्ना-संज्ञया गुणेन च-बर्बर' अभूत् यः-बर्बर अत्र-भारते पानीपतयुद्धम्-पानीपत्ताख्य संग्रामम् विजित्य-जित्वा धरापण्डले -धराम्-पृथ्वी, पान्तीति धरापाः-राजानः तेषां मण्डले-समूहे प्रसिद्धिम्-ख्यातिमवाप-प्राप्तवान् ।

जिसके पितामह बर्बर गुण से भी 'बर्बर' (उदण्ड) ही थे । उन्होंने पानीपत की लड़ाई में विजयी होकर राजाओं में प्रसिद्धि प्राप्त की ।

पिता च यस्य क्षिति-राजरञ्जनः -हुमायू' नामा रिपुरोष-भञ्जनः ।
प्रभञ्जनस्तस्य सुतो भवेन्न किं विपक्षि-सन्यङ्गत-गर्व गञ्जनः ॥

च-किञ्च यस्य-अकबरस्य हुंमायु" नामा-हुंमायु नामकः पिता-जनकः, क्षितिराजरञ्जन-पृथिव्या राज्ञां प्रसन्नकरः, रिपुरोधभञ्जनः शत्रूणां क्रोध बिनाशकः आसीत् । तस्य हुंमायोः सुतः-पुत्रः अकबर, त्रिपक्षिसन्यगतगर्वगञ्जनः-शत्रुसैन्यशक्त्यपहारकः प्रभञ्जनः -वायु, (इव) किं न भवेत्-कस्मात् न सजायेत ।

जिसका हुंमायु नामक पिता पृथवी के राजाओं को प्रसन्न रखने वाला तथा शत्रुओं की सेना के क्रोध को नष्ट करने वाला था उसका पुत्र अकबर वायु के समान शत्रुओं के गर्व को दूर करने वाला क्यों न हो ।

छली रिपुर्भारतवर्ष-भू-भुवां स कूटनीतौ प्रथितो भुवस्तले ।
यम-प्रतिस्पर्धि-विशुद्ध-हैन्दवं, निनाय नाशं क्रमशः पराक्रमम् ॥

भारतवर्षभूभुवाम्-भारतीयानाम्, रिपुः-शत्रुः, भुवस्तले-पृथिव्याम् कूटनीतौ-छद्मव्यवहारे प्रथितः-प्रख्यातः सः यमप्रतिस्पर्धिविशुद्धहैन्दवम्-यमराजस्यापि प्रतिभटभूतम्, शुद्धहिन्दुसम्भूतम् पराक्रमम्,-शौर्यम्, क्रमशः-क्रमेण, नाशम्-विनाशम्, निनाय-अनयत् ।

भारतीयों का शत्रु कूटनीति में प्रसिद्ध, उस अकबर ने यम से भी प्रतिस्पर्धा करने वाले शुद्ध हिन्दुओं के पराक्रम को क्रमशः विनष्ट किया ।

स हिन्दुहा हिन्दुभिरेव सन्ततं विधाय सङ्गं बलतश्च लोभतः
तदीय-कन्याजन-सङ्गमाऽऽकुलः, चकार तांस्तानखिलान् पदाश्रितान्

बलतः-बलेन, लोभतश्च-प्रलोभनेन च हिन्दुभिरेव-हिन्दुपद-वाच्यैः-सह सगन्-मैत्रीम्, विधाय-कृत्वा, तदीयकन्याजनसंगमाकुलः-तदीयानाम्-हिन्दूनाम्, कन्याजनानाम्-पुत्रीणाम् संगमस्य आकुलः व्याकुलः सः हिन्दुहा-हिन्दूनां हन्ता, तांस्तान्-मित्रभूतान् हिन्दून् अखिलान्-सर्वान्, पदाश्रितान्- पदाधिष्ठितान् चकार-अकरोत् ।

बल तथा प्रलोभन के द्वारा हिन्दुओं के साथ मित्रता करके उनकी कन्याओं के साथ रमण करने के लिए व्याकुल तथा हिन्दुओं का विनाशक वह अपने मित्र सभी हिन्दुओं को पदासीन कर दिया ।

अथेत्थमेव प्रविधाय दुष्कृतिं महादयालोर्दयया वशीकृतः
तदीय-सैन्याधिपतिस्तदाऽभवत् स मानसिंहो महितो महीतले

अथ-अनन्तरम्, तदा-तस्मिन् काले, महादयालोः-अकबरस्य, दयया -कृपया, वशीकृत -वशीभूतोजातः, महीतले-पृथिव्याम्, महितः प्रख्यातः सः-मानसिंहः इत्थम् एतत् प्रकारकमेव दुष्कृतिम्-पापं प्रविधाय-कृत्वा तदीयसैन्याधिपतिः-अकबरस्य सेनापतिः, अभवत्-अभूत् ।

इसके पश्चात् अकबर की दया के वशवर्ती होकर जगत् प्रख्यात् मानसिंह भी इसी तरह का पाप करके अकबर के सेनापति बने।

## प्रतापप्रतिज्ञा

५० सिंहासने स हि 'महेन्द्र' पदेऽभिषिक्तो, लोके बभावतितरां जगदेकवीरः
नैसर्गिकी भवति हेम-घट-प्रभावान् मार्तण्डरश्मि-रुचिरस्य पुनः कथा का

सिंहासने-राज्यासने, महेन्द्रपदेऽभिषिक्तः-महाराजपदे कृताभिषेकः जगदेकवीरः-जगतः प्रधानो वीरः सः-महाराणाप्रतापः लोके-जगति, अतितराम्-अतिशयेन, बभौ-शुशुभे। हि-यतः, हेमघटः-स्वर्णकुम्भः नैसर्गिकः-स्वभावेन प्रभावान् भवति पुनः-भूयः, मार्तण्डरश्मिरुचिरस्य सूर्यज्योतिर्भिर्मण्डितस्य स्वर्णघटस्य, का कथा? स तु अतितरां प्रकाशते।

महेन्द्र की पदवी से सिंहासन पर अभिषिक्त संसार के प्रधान वीर महाराणा प्रताप संसार में अत्यन्त सुशोभित हुए। स्वर्णघाट तो स्वभावतः चमकता है किन्तु सूर्य की किरणों से सुशोभित स्वर्णघट का क्या कहना?

५१ 'मेवाड़'-मण्डल-मणिः स महाप्रतापी, दृष्ट्वा दशां विमल-भारतवर्षमध्ये
इत्थं चकार जगतां प्रथितां प्रतिज्ञां, प्रज्ञांनियोज्य निपुणञ्च विचार्य विज्ञान्

'मेवाड़' मण्डलमणिः मेवाड़ मण्डलस्य मणिः-प्रकाशकः, महाप्रतापी-महातेजस्वी सः-प्रतापसिंहः, भारतवर्षमध्ये भारतवर्षे हिन्दूनां दयनीयां दशां-अवस्थाम् दृष्ट्वा-संवीक्ष्य, प्रज्ञां प्रयोज्य-बुद्धिं स्वस्थां कृत्वा, विज्ञान्-विदुषः, निपुणम्-सम्यक्, विचार्य विमृश्य, च जगताम्-जनानाम् मध्ये, प्रथिताम् -प्रसिद्धाम् इत्थम्-अनेन प्रकारेण, प्रतिज्ञाँ चकार-प्रतिजज्ञे।

मेवाड़मण्डल के प्रकाशक महातेजस्वी महाराणा प्रताप ने शुद्ध भारत वर्ष में हिन्दुओं की इस दुर्दशा को देखकर मन को [illegible]

करके तथा विद्वानों से परामर्श करके लोकप्रख्यात यह प्रतिज्ञा की

92 यावत्प्रभाहतमतो मम भारतं मा, भूयः प्रभा-रतमलं भुवने भवेन्न ।
तावत्कदापि कथमप्यपि नैव, नूनं यास्यामि जन्मनगरं नगरं गरीयः ॥

यावत्-यावत्कालपर्यन्तम्, मम-मामकीनम्, अदः-एतत्, प्रभाहतम्-क्षीणप्रभम्, भारतम्, भुवने-लोके, भूयः-पुनः, वै-निश्चयेन, अलम्-पूर्णम्, प्रभारतम्-कान्तिविशिष्टं, मा-नहि भवेत्, तावत् कालपर्यन्तम् नूनम्-निश्चयेन अहम् कथमपि-केनापि प्रकारेण, स्वकीयं गरीयः-श्रेष्ठतमम्, नगरम् जन्मनगरम् जन्मस्थानम् अपि कदापि नैव-नहि यास्यामि-गमिष्यामि ।

जब तक मेरा यह क्षीणप्रभ भारत पुनः अपनी पूर्ण गरिमा को नहीं प्राप्त कर लेगा तब तक मैं श्रेष्ठ नगरी अपनी जन्म भूमि को नहीं जाऊँगा !

93 अत्स्यामि पत्रपुटके न पुनर्न हैमे, वत्स्यामि पर्ण-भवने विजने न हर्म्ये ।
स्थास्याम्यहं भुवि तृणासनकेषु तेषु, नत्वच्छ रत्न-रचितेषु नृपासनेषु ॥

अहम् नु पत्रपुटके-पत्रनिर्मिते पात्रे अत्स्यामि-भोक्ष्ये पुनः-भूयः हैमे-स्वर्णनिर्मिते पात्रे न, विजने-निर्जने पर्णभवने-पर्णकुटीरे वत्स्यामि-निवसिष्यामि, हर्म्ये न-अट्टालिकासु न, भुवि-पृथिव्याम् तृणासनकेषु-तृणानिर्मितासनेषुस्थास्यामि-उपवेक्ष्यामिअच्छरत्नरचितेषु -अच्छरत्नानां रत्ननिर्मितेषु, तेषु-पूर्वोपभुक्तेषु नृपासनेषु राजासनेषु तु न ।

मैं पत्तों के पात्रों में ही खाऊँगा सोने के पात्रों में नहीं झोपड़ियों में ही रहूँगा महलों में नहीं, मैं तृण के आसनों पर ही बैठूँगा उन रत्नजटित सिंहासनों पर नहीं ।

जाज्वल्यमानकिरणोऽस्तु दिनेषु चन्द्रः, सूर्यः-समुल्लसतु पश्चिमदिक्प्रदेशात् ।
शुष्कः सरित् भवतु कमलं परन्तु, व्यर्था भविष्यति न मद्विहिता प्रतिज्ञा ॥

चन्द्रः-चन्द्रमा, दिनेषु-दिवसेषु, जाज्वल्यमानकिरणः-दीप्त

मानकिरणो, अस्तु-भवितुमर्हति, सूर्यः-भानुः पश्चिमदिक्प्रदेशात् -पश्चिमदिशातः, समुल्लसतु-उदियात्, कल्पतरुः-कल्पवृक्षः, स्वतः -स्वयमेव, शुष्को भवतु, परन्तु-किन्तु मद्विहिता-मयाकृता, प्रतिज्ञा व्यर्था-निष्फला नहि भवितुमर्हति ।

चन्द्र दिन में भले ही चमकने लगे, सूर्य पश्चिम दिशा से उगने लगे तथा कल्पवृक्ष स्वयं ही सूख जाय, किन्तु मेरी यह प्रतिज्ञा व्यर्थ नहीं होगी ।

या मञ्जुनुपुरवैः रमणी मणीनां, पीयूषतोऽपि मधुरैर्मधुरा पुराऽऽसीत् !
सेयं 'चित्तौर' नगरी नगरीष्वनन्या, कस्याऽद्य नैव हृदयं हठतो दुनोति !!

पुरा प्राचीनकाले, या चित्तौर नगरी रमणीमणीनाम्-रमणी श्रेष्ठानाम्, मञ्जुनूपुररवैः-नूपुराणां मनोहरध्वनिभिः पीयूषतः । अमृतात् अपि, मधुरा-हृद्या-आसीत, सा इयम् अद्य कस्य-सहृदय -स्य, हृदयम् चित्तम्, हठात्-प्रसभात् नैव-नहि, दुनोति-दुःखा-करोति ।

जो चित्तौर नगरी पहले श्रेष्ठ रमणियों के नूपुरों की मधुर ध्वनियों से अमृत से भी अधिक प्रिय लगती थी वही आज किस सहृदय के हृदय को नहीं दुखी बनाती ?

याऽऽसीत् पुरा हरितशस्यलाऽभिरामा, स्निग्धाभ्रनील-वसना कृत-सर्वकामा ।
सा जन्म-भूः प्रतिपदं नररक्तरक्ताऽभक्ताऽद्य जीवति कथञ्चिदहोऽत्यशक्ता ।।

अहो ! या नगरी पुरा-प्राचीनकाले, शस्यदलाभिरामा हरितैः शस्यदलैः-सस्यसमुदायैः अभिरामा-मनोहरा या सा, स्निग्धा-भ्रनीलवसना-स्निग्धानि-जलपूर्णानि अभ्राण्येव, नीलं वसनं-वस्त्रं यस्यास्सा, कृतसर्वकामा-सर्वकामफलप्रदा च आसीत् सा एव मम जन्मभूः-जन्मभूमिः अभक्ता,-श्रद्धालुजनरहिता, अत्यशक्ता- सामर्थ्येन विहीना, नररक्तरक्ता च-मानवशोणितशोणिता च अद्य-सम्प्रति कथञ्चित्-केनापि प्रकारेण, जीवति मात्रम् ।

जो नगरी पहले शस्य-श्यामला, नीलमेघरूपी वस्त्रों से सम-

लंकृत तथा सभी कामनाओं को पूर्ण करने वाली थी वही मेरी जन्मभूमि आज श्रद्धालुजनों से रहित असमर्थ तथा मानव रक्त से रञ्जित होकर आज किसी प्रकार से जी मात्र रही है।

९५ क्वाऽपि प्रतारणमलं ललनाजनानां, दृष्ट्वा क्वचित् सुरजन-प्रतिमाऽपमानम्
हिन्दूनिवलोक्य च पशूनिव हन्यमानान्, हा !! हृत्तलं भवति मे शतधा विदीर्णम्

हा इति कष्टे, क्वापि-कुत्रचित, ललनाजनानाम्-स्त्रीणाम्, अलम् भृशम्, प्रतारणं दृष्ट्वा क्वचित् च सुरजनानाम् -देवानाम् प्रतिमायाः-मूर्तेः अपमानम्-अनादरम् च दृष्ट्वा च-किञ्च पशूनिव, हन्यमानान्-ताडयमानान् हिन्दून् विलोक्य दृष्ट्वा, मे-मम, हृत्तलम्-हृदयम्, शतधा-अनेकधा, विदीर्णम् भवति ।

कहीं स्त्रियों के अत्यन्त अपमान को देखकर, कहीं देवमूर्तियों के अपमान को देखकर , तो कहीं पशु की तरह मारे जाते हुए हिन्दुओं को देखकर, मेरा हृदय टुकड़े-टुकड़े हो जाता है।

९६ भ्रातुः सहोदर-वरस्य वधाय पूर्वं, योऽभ्युद्यतोऽभवदहो समरेऽप्रधर्षः।
तस्याऽस्ति ते करुणया किमु नाम कार्यं शीघ्रं कृता न जनता न नतानना चेत्

अहो, या अप्रधर्षः-अकुण्ठितः मम भल्लः पूर्वम्-पुरा सहोदरवरस्य-सोदरश्रेष्ठस्य; भ्रातुः-शक्तिसिंहस्य, बधाय-बधकरणाय, अभ्युद्यतः-समुद्यतः, अभवत्-अभूत् तस्य ते-भल्लस्य करुणया, किमु नाम कार्यम् अस्ति-किमास्ते प्रयोजनम् चेत्-यदि शीघ्रम्, त्वरितम्, जनता-मेवाडवासिनी जनता, न नतानना न कृता स्वतन्त्रता नहि सम्पादिता:

अरे मेरे अकुण्ठित कुन्त ! जो तुम लडाई में सहोदर भाई का वध करने के लिए तैयार हो गये थे उस तुम्हें करुणा से क्या प्रयोजन ? यदि तुम शीघ्र ही जनता को स्वन्त्र नहीं कर देते ।

शोकं विधेहि नहि भारतभृङ्ग ! नूनं, यत्पारतन्त्र्य-रजनीगतपद्म-बद्धः ।
भूयो भविष्यति चिराय सखेऽधुनैव, स्वातन्त्र्यसूर्य-किरणारुणसुप्रभातम् ॥

हे भारतभृङ्ग-भारतद्विरेफ ! चिराय-दीर्घकालाय, पारतन्त्र्य-रजनीगतपद्मबद्धः-पारतन्त्र्यम्-परतन्त्रता, तदेव रजनी-रात्रिः, तद्गतम् यत् पद्मम्-कमलम् तत्र बद्धः अभूः तस्मात् शोकम् -चिन्ताम् नहि विधेहि-माकुरु। सखे-मित्र, भूयः-पुनः अधुनैव -सपद्येव स्वातन्त्र्यसूर्यकिरणारुणसुप्र-भातम् स्वातन्त्र्यमेव सूर्यः -भास्करः तस्य किरणैः रश्मिभिः अरुणम्-रक्तिमम् सुप्रभातम् -मनोज्ञः प्रातः कालो भविष्यति ।

ऐ भारत रूपी भ्रमर इसलिए शोक मत करो कि तुम परतन्त्रतारूपी रात्रि के कमल में दीर्घ-काल तक फँसे रहे मित्रशीघ्र ही स्वतन्त्रता-रूपी सूर्य को किरणों द्वारा सुप्रभात होगा ।

प्राणादपि प्रियतमा निज-पूर्वजानां, मान्या पुनर्भवतु जन्म-धरा स्वतन्त्रा ।
साऽऽभारतीरितगुणावलिरद्य भूयः, सा भारती भवतु भारत-भूतिभूत्यै ॥

निजपूर्वजानाम् प्रणादपिप्रियतमा-प्राणेभ्योऽपि गरीयसी, मान्या-समादरणीया जन्मधरा-जन्मभूमिः पुनः-भूयः स्वतन्त्रा भवतु । साऽऽभा-दीप्तिदीपिता रतीरितगुणावलिः-रत्या-प्रेम्णा ईरिता-प्रोक्ता,गुणानाम् अवलिः-राशिः सा-पूर्वानुभूता, भारती-सरस्वती, अद्य-सम्प्रति भूयः-पुनः भारतभूतिभूत्य-भारतवर्षस्य कल्याणाय भवतु-भवतात् !

अपने पूर्वजों को प्राणों से भी प्रियतमा समादरणीया मेरी जन्मभूमि पुनः स्वतन्त्र होए तथा दीप्तिमती प्रेम पूर्वक वर्णित गुणराशि वाली सरस्वती भारत की कल्याणकारिणी बने ।

## मान—मानहानिः

विजित्य शोलापुरगं महारणं, स मानसिंहो जयमालिकाऽञ्चितः ।
बभूव मनोन्नत-भाल-भाक् पथि, प्रतापसिंहस्य निकेतनाऽतिथिः ॥

शोलापुरगम्–शोलापुरे संजातम् महारणम्–महासंग्रामम् विजित्य जयमालिकाञ्चितः–विजयमालसुशोभितः, मानोन्नतभालभाक्–दर्पोन्नतललाटः सः प्रख्यातः, मानसिंहः, पथि–मार्गे प्रतापसिंहस्य निकेतने–गृहे, अतिथिः बभूव–अभूत्।

शोलापुर का महासंग्राम जीतकर जयमाल से विभूषित तथा गर्व से उन्नत ललाट वाले वे मानसिंह रास्ते में प्रतापसिंह के घर अतिथि बन गये।

प्रतापजातोऽ 'मरसिंहनामवान्' तदीयमातिथ्यमलं तदाऽकरोत्।
स्वयम्प्रतापस्तु कदाप्यहो! सकृत्, न चाह्वयत्तं न तदन्तिकङ्गतः॥

तदा–तस्मिन् काले, प्रतापजातः–प्रतापसिंहस्य पुत्रः, अमरसिंहनामवान्, तदीयम्–मानसिंहस्य, आतिथ्यम्–सत्कारम्, अलम्–परिपूर्णरूपेण, अकरोत्–अकार्षित्। अहो इत्याश्चर्ये, प्रतापस्तु–प्रतापसिंहस्तु, स्वयम्–आत्मनैव, सकृत–एकदाऽपि, तदन्तिकम्–तस्यसन्निकटे, कदापि,न गतः–नह्यगात् तञ्चाह्वयदपि न–मानसिंहम् आकारयदपि नहि।

प्रतापसिंह के पुत्र अमरसिंह ने उनका पूर्ण सत्कार किया; किन्तु प्रतापसिंह न तो उनके पास गये और न उनसे बोले–

उदीरितो भाजन! भोजनाय वै स मानसिंहोऽमरसिंहवर्म्मणा।
न वीक्ष्य तस्मिन्समयेऽपि तन्नृपं व्याभाषतैव परितापतोऽमरम्॥

अमरसिंहवर्म्मणा–प्रतापसिंहस्य पुत्रेण सः–मानसिंहः भोजन-हे जनइत्युक्त्वा भोजनाय–अभ्यवहाराय, उदीरितः–आहूतः। तस्मिन् अपि समये–भोजन काले अपि तम् नृपम्–प्रतापसिंहम् न वीक्ष्य–अनवलोक्य, सः–मानसिंह परितापतः,–संतापयुक्तः अमरम्–अमरसिंहम्, एवम्–अनेन प्रकारेण व्याभाषत–अवोचत्।

अमरसिंह के द्वारा भो जन! कहकर भोजन के लिए बुलाये गये मानसिंह ने उस समय भी प्रतापसिंह को न देखकर दुखी होकर कहा—

पुराऽऽगतो नैव वरं स नागतः, प्रतापसिंहः कथमत्र नागतः ।
अनागते हन्त ममाशनं कथं, तदत्र शीघ्रं वद किन्नु कारणम् ? ॥

पुरा – अग्रे, प्रतापसिंहः नैव–नहि, आगतः वरं नागतः किन्तु सः प्रतापसिंहः अत्र– भोजनकाले कथम्–कस्मात् कारणात् नागतः ? हन्त – इतिखेदे अव्ययम् । तस्मिन् अनागते अनुपस्थिते मम अशनम् – भोजनम् ; कथम् भवितुमर्हति ? तदत्र–प्रतापसिंहस्य अनागमने, किन्नुकारणम् आस्ते इति शीघ्रं वद ।

प्रतापसिंह पहले नहीं आये, यह तो ठीक है, किन्तु वे भोजन के समय क्यों नहीं आये ? उनके बिना मैं कैसे भोजन करूंगा ? शीघ्र बताओ क्या कारण है ?

उवाच वाचं महितः स मत्पिता, नितान्त-तान्तोऽस्ति शिरोव्यथा हतः ।
ततोऽशनं वै भवता समं विभो ! न शक्यते तेन विधातुमन्ततः ॥

सः–अमरसिंहः वाचम् उवाच–अवोचत् यत् महितः मत्पिता–समादरणीयः मम पिता, शिरोव्यथाहतः–शिरोवेदनया आक्रान्तः नितान्त–तान्तः– अत्यन्तसंतप्तोऽस्ति । हे विभो ! ततः–तस्मादेव कारणात् तेन–ममपित्रा भवतासमम्–त्वया सह, अन्ततः–अन्तिमकालपर्यन्तम्, अशनम्–भोजनम्, विधातुम् कर्तुम् न शक्यते ।

अमरसिंह ने कहा, श्रीमान् मेरे पिता शिरोव्यथा से अत्यन्त पीड़ित हैं अतएव वे आप के साथ भोजन नहीं कर सकते हैं ।

निशम्य चैवं ह्यमरं निहारयन्, शिरस्तलेऽन्नस्य कणं प्रधारयन् ।
समुत्थितो भोज्यमलं निवारयन्, ननाद वाक्यं च लसन्महारयम् ॥

मानसिंहः एवम्–उपर्युक्ताम् वाचम् निशम्य–श्रुत्वा अमरम्–अमरसिंहम् निहारयन्–अवलोकयन् शिरस्तले–मूर्ध्निउष्णीशान्तराले, अन्नस्य कणम्–परिवेशितान्नस्य अंशम् , प्रधारयन्; अलम्–सम्पूर्णम् भोज्यम्–भोजनम् निवारयन्–परित्यजन् च समुत्थितः–भोजन–स्थलादितिशेषः लसन् महारयम्–अत्यन्तवेगवत्; वाक्यम् ननाद–जगर्ज ।

इस तरह की बाते सुनकर अमरसिंह को देखते हुए , अन्न कण अपनी पगड़ी में रखते हुए सारा भोजन छोड़ कर मानसिंह भोजन स्थल से उठकर खड़े हुए और जोर से गरजकर बोले--

६६ वद प्रतापं नममानकारिणं, यदेष मानो भवता तिरस्कृतः ।
इहाऽऽश्चथाऽऽयास्यति सौषधिर्यतः-'शिरोव्यथा' ते न पुनर्भवेद् भवे ॥

तम् -अमानकारिणम्-अपमानकारिणम् प्रतापम्-प्रतापसिंह वद -ब्रूहि यत् भवता-त्वया, तिरस्कृतः-अनादृतः, एषः-अयम्; मानः-मानसिंहः आस्ते । अथ-अनन्तरम्, ईह-चित्तौरनगर्याम्, सा औषधि-भषजम्; आशु शीघ्रम् आयास्यति- एष्यति येन भवे-लोके, पुनःभूयः-ते-तव, शिरोव्यथा-शिरोवेदना, न भवेत् ।

उस अपमान करने वाले प्रतापसिंह से कह दो कि आपके द्वारा मानसिंह तिरस्कृत हुए हैं । अब यहां वह दवा आयेगी जिससे आपको पुनः कभी शिरोव्यथा न हो ।

६६ तदैव हर्षेण गृहाद् विनिःसरन् स साहसी तं सहसा जनं हसन् ।
सहस्र-नेत्र प्रतिमो रिपुन्दमो महाद्युतिर्वाचमुवाच मानिनम् ॥

तदैव-तदात्वे एव, सहसा-झटिति, सहस्रनेत्रप्रतिमः-इन्द्रसदृशः महाद्युतिः-दीप्तिदीप्तः, रिपुन्दमः-शत्रूणां दमनकर्ता, साहसीउत्साहस-मन्वितः सः-प्रतापसिंहः, हर्षेण-हर्षपूर्वकम् गृहात्-भवनात्, विनिःसरन्-बहिर्भवन् तं मानिनम्-दर्पयुक्तम् जनम्-मानसिंहम्, वाचम् उवाच-अवादीत् ।

उसी समय सहसा-इन्द्र के समान , देदीप्यमान, शत्रुओं का दमन करने वाले, साहसी प्रतापसिंह ने घर से निकल कर उस घमण्डी मानसिंह से कहा---

६७ पितामहस्ते यवनाय कन्यकां ददौ ततः किन्न कुलं कलङ्किनम् ।
तथाऽपि साधं मयकैव भोजनं न मान ! एवं भज माननीयताम् ॥

ते-तव , पितामहः-पितुः पिता यवनाय कन्यकाम् ददौ

प्रादात् किम् तत्–तेन गर्हितेन कर्मणा, तव कुलम्–वंशः न कलंकितम् । तथापि – गर्हितवंशजो भूत्वाऽपि मयकैव–मयैव–साकम्–सह, भोजनम्–अशनम् वाञ्छसि ? मान–मानसिंह, एवम्–अनेन प्रकारेण, माननीयताम् – सम्माननीयताम् न– नहि, भज ।

तुम्हारे पितामह ने यवन को कन्या प्रदान कर दी । क्या उससे तुम्हारा कुल कलंकित नही हुआ ? फिर तुम मेरे ही साथ भोजन करना चाहते हो ? मानसिंह इस तरह का सम्मान नहीं प्राप्त करो ।

वयं क्व वर्णाश्रमधर्ममर्मगाः सदा सदाचार–विचार–धारकाः ।
स्वजाति–हीनाः कुलधर्मतश्च्युताः, क्व हन्त ! यूय कृमि–तुल्य– जन्तवः ॥

वर्णाश्रमधर्ममर्मगाः–वर्णाश्रमधर्मपरिपालकाः सदा – सर्वदा, सदाचारविचारधारकाः–सताम्– सज्जनानाम् आचारः–आचार–णाम् तत्सम्बन्धी विचारं धरन्ति ये ते वयम् क्व कुत्र क्वच स्वजाति–हीनाः–स्ववर्णपतिताः कुलधर्मतः–वंशधर्मतः च्युताः–पतिताः कृमितुल्यजन्तवः–कीटसदृशाः जीवाश्च उभयोः साम्यमसंभवम् ।

कहाँ तो वर्णाश्रमधर्म का पालन करने वाले तथा सद्विचार वाले हम और कहां अपनी जाति तथा वंश के धर्म से गिरे हुए कीट के सदृश जीव तुम ? दोनों की एकता असंभव है ।

सह त्वया हन्त ! कृतेऽनुरञ्जने, न कि विरुद्धं जगतीतले भवेत् ।
क्व दन्तिनः स्याच्छशकेन मित्रता, क्व जम्बुकः सिंह–सखः श्रुतस्त्वया ॥

हन्त ! –अरे त्वया–मानसिंहेन सह, अनुरंजने–स्नेहाभिव्यक्तौ कृते किम् जगतीतले–लोके विरुद्धम्–विपरीतम् न भवेत् ? दन्तिनः–हस्तिनः मित्रता – मैत्री शशकेन सह क्व–कुत्र स्यात् भवेत् ? त्वया–मानसिंहेन सिंहसखः–सिंहमित्रम् जम्बुकः –शृगालः क्व श्रुतः ?

तुम्हारे साथ मैत्री लोकविपरीत नहीं होगी ? कहीं हाथी और खरगोश की मित्रता होती है ? तुमने सिंह का मित्र स्यार कहीं सुना है क्या ?

६१ अनल्प-रुक्षाक्षर-जल्पनाकुलः, तपंल्ललाटन्तपवन्मुखाऽरुणः ।
जगाद शैघ्र्येण हयोपरि स्थितः, स मानसिंहोऽपि गिरङ्गरीयसीम् ॥

अनल्परुक्षाक्षरजल्पनाकुलः—अनल्पानि—बहूनि, रुक्षाक्षराणि—कठोराक्षराणि सन्ति यस्यां जल्पनायाम्-प्रलापे तया आकुलः-व्याकुलः ललाटन्तपवत् मध्यंदिने सूर्यवत् तपन्—प्रज्ज्वलन् सन् मुखारुणः—रक्तमुखः सः; शैघ्र्येण—शीघ्रतया; हयोपरि—अश्वोपरि, स्थितः सन्, मानसिंहोपि, गरीयसीम्—गम्भीराम् गिरम्—वाणीम्, जगाद-उवाच ।

अत्यन्त कठोर वाक्यों से व्याकुल, दोपहर के सूर्य के समान संतप्त तथा क्रोध के कारण लालमुख वाले, वे मानसिंह भी शीघ्रता-पूर्वक घोड़े पर चढ़ते हुए गम्भीर वाणी में बोले ।

६२ रणोन्मुखस्तिष्ठतु सज्जितो भवान्, ध्रुवं मदीयाऽऽगमनम् भविष्यति ।
अथाऽऽवयोरेकजनश्च सङ्गरे यशोऽवशेषो भविता नु भूतले ॥

भवान् रणोन्मुखः—संग्रामोद्यतः, सज्जितः—सन्नद्धः सन् तिष्ठतु मदीयागमनम्—ममागमनम्, ध्रुवम्—निश्चितम्, भविष्यति । नु—निश्चयेन, अवयोर्मध्ये एकः—अन्यतरः, जनः—पुरुषः, भूतले—पृथिव्याम् यशोऽवशेषः मृतः, भविता ।

आप लड़ाई के लिए तैयार रहें, मेरा आगमन अवश्य होगा । हम दोनों में से एक आदमी अवश्य मरेगा ।

विदारिताऽस्यः परितः स्फुरत्सटः, भयानाऽऽकारवरोऽधिकाननम् ।
प्रसुप्त सिंहोऽद्य हठात्प्रबोधितः, न मानसिंहो भवता तिरस्कृतः ॥

भवता—प्रतापसिंहेन, मानसिंह—अहम्, न तिरस्कृतः—नहिअनादृतः किन्तु अद्य विदारितास्यः—विवृताननः, परितः—सर्वतः, स्फुरत्सटः—देदीप्यमानायालः, भयानकाकारवरः—घोराकृतिः अधिकाननम्—अरण्ये,

प्रसुप्तसिंहः-निद्रितकेसरिः, हठात्-हठपूर्वकम्, प्रबोधितः-जागरितः ।

आपने मेरा अपमान न करके भयंकर सिंह को सोते से जगाया है।

63 पदाहतः कोपमयो महाफणी, मुहुर्मुहुर्न्यञ्चित-भोग-मण्डलः ।
पुनर्हतः पादतलेन साम्प्रतं न मानसिंहो भवता तिरस्कृतः ॥

भवता-प्रतापसिंहेन मानसिंहः-अहम्, न तिरस्कृतः-नह्यपमानितः, अपितु पदाहतः-पदभ्यांप्रताडितः, कोपमय-कोपाविष्टः, मुहुर्मुहुः-भूयोभूयः, न्यञ्चितभोगमण्डली-नामितफणामण्डलः, महाफणो-महासर्पः, साम्प्रतम्-इदानीं, पुनः-भूय, पादतलेन-चरणेन हतः-प्रताडितः ।

सर्प. 

आपने मेरा अपमान नहीं किया है बल्कि भयंकर पदाहत क्रोधाविष्ट सर्प को पुनः पैरों से प्रहार किया ।

64 य एकलो भारत-भूपतेः प्रियः, प्रसिद्ध सेनापतिरस्ति वीर-राट् ।
रिपुत्वमङ्गीकरणं ततोऽभयं, विभावयेत् को नु भवन्तमन्तरा ॥

यः-मानसिंहः वीरराट्-वीराग्रगण्यः, भारतभूपतेः-भारतवर्षस्य राज्ञः, एकलः-एकाकी, प्रियः प्रसिद्धसेनापतिः-प्रख्यात् सेनाधिपतिः अस्ति ततः-तेन सह अभयम्-निर्भयम् रिपुत्वमङ्गीकरणम्-शत्रुत्व स्वीकरणम्, भवन्मन्तरा-त्वाम् विना को नु विभावयेत्-वृणुयात् ।

जो वीराग्रगण्य तथा भारताधिपति का प्रियतम तथा प्रसिद्ध सेना पति है, उससे आपके बिना दूसरा कौन शत्रुता मोल ले सकता है ?

65 जगाद भूयस्तदनन्तरं क्रुधा, प्रतापसिंहः किल सिंहविक्रमः ।
विधाय 'मानं' धृत मौनमन्ततः, स वीरराजः स्फुरितोत्तराधरः ॥

तदनन्तरम्-तत्पश्चात्, मानम्-मानसिंहम् अन्ततः-पूर्णरूपेण मौनम् तुष्णीं विधाय-कृत्वा स्फुरित्तोत्तराधरः-स्फुरन् उत्तरोष्ठः ।

सिंहविक्रमः-सिंहसदृशपराक्रमवान् वीरराजः-वीराधिपतिः सः-प्रतापसिंह भूयः-पुनः क्रुधा-सक्रोधम् जगाद किल अनोचत् ।

मानसिंह को पूर्ण रूप से चुप कराकर वे अपने उत्तरोष्ठ को कँपाते हुए सिंह के सदृश पराक्रम वाले वीराग्रगण्य प्रताप सिंह क्रोध पूर्वक पुनः मानसिंह से बोले —

अलर्कवत्केशरिणः पदान्तिके, वराक ! जल्पस्यलमग्रतो मुधा ।
तृणायतस्त्वद्बलतः कदाप्यहो ! ममाग्निरूपस्य कथम्भयं भवेत् ॥

हे वराक-दयनीय । केशरिणः-सिंहस्य अग्रतः-अग्रे, पदान्तिके-पश्चाच्च, अलर्कवत्-प्रमत्तश्वावत्, मुधा-व्यर्थमेव, अलम्-बहु, जल्पसि-प्रलपसि, तृणायतः-तृणसदृशात्, त्वद्बलतः-तव सेनातः, अग्निरूपस्य-वह्निव मम भयम् कदापि-कदाचिदपि, कथम्-केन-प्रकारेण, भवेत्-भवितुर्हति ।

ऐ दयापात्र मानसिंह कि आगे पीछे बहुत भूँकने वाले पागल कुत्ते की तरह क्या बोल रहे हो । तृण के समान तुम्हारी सेना से अग्नि के समान मुझे क्या भय होगा ।

न गर्वमेवं कुरु वीरताञ्चितं प्रदर्शय स्वं बलमेव सैन्यगम् ।
वदन्ति वीरा न कदापि किन्तु ते स्वकर्म भीमं विदधत्यभीतितः ॥

एवम्-इत्थम् वीरताञ्चितम्-वीरतायुक्तम्, गर्वम्-दर्पम्, नहि कुरु-विधेहि, स्वम्-स्वकीयम्, सैन्यम-सेनागतम, बलमेव-पराक्रमेव, प्रदर्शय-प्रकटय, वीराः-पराक्रमिणः कदापि-कदाचिदपि न-नहि, वदन्ति, तु-किन्तु ते, अभीतितः-निर्भयतया, भीमम्-भयंकरम् स्वकर्म-पराक्रमेव, विदधति-प्रदर्शयन्ति ।

तुम इस तरह का घमण्ड न करके अपनी सेना का बल ही दिखलाओ वीर लोग कभी बोलते नहीं अपितु वे अपना भयंकर पराक्रम ही दिखलाते हैं ।

८८ व्रजस्वगेहं निजसैन्य-सज्जितः पुनः समागच्छ मदर्थमातुरः ।
तदा तव स्वागतमत्र मानिनः, स्वयं करिष्यामि कृपाणपाणिना ॥

स्वगेहम्-स्वगृहम्, व्रज-याहि, निजसैन्यसज्जितः-निजबलसमलंकृतः, मदर्थम्-मह्यम्, आतुरः-व्याकुलाः, त्वम् पुनः-भूयः, समागच्छ-आयाहि, तदा अत्र-चित्तौड़नगर्याम् स्वयम्-आत्मना, कृपाणपाणिना-असिहस्तेन मया ते-तव, स्वागतम् करिष्यते ।

अपने घर चले जाओ अपनी सेना के साथ सजकर आना। उस समय तलवार धारी स्वयम् मेरे द्वारा तुम्हारा स्वागत किया जायगा ।

८९ विधाय शीघ्रं समरेऽथ स-मान ! ते दुर्मद-मान-मर्दनम् ।
तथा समुन्मूल्य कुलैककण्टक, ततः कृतार्थो भवितास्मि भूतले ॥

हे स-मान-दृप्त, अथ-अनन्तरम् समरे रणे, सर्वथा-पूर्णरूपेण ते-तव, दुर्मदमानमर्दनम्,-दुःखदावलेपखण्डनम्. शीघ्रं-तूर्णम् विधाय-कृत्वा तथा-किञ्च, कुलैककण्टकम्-कुलस्य-वंशस्य, एकम् प्रधानम् कण्टकम् त्वाम् समुन्मूल्य नाशयित्वा: ततः-तदनन्तरम भूतले-जगत्याम्, कृतार्थः-कृतकृत्यः, भवितास्मि-भविष्यामि ।

हे दृप्त ! तुम्हारे घमण्ड को चूर करके वंश के एकमात्र कण्टक तुम्हारा नाश करके मैं भी संसार में कृतकृत्य हो जाऊँगा ।

९० प्रताप-वाक्यक्रकचेन, निकृत्तमर्मा गमनोद्यतोऽभवत् ।
यदैव, केनापि कटू प्रलापिना, वचस्तदैवेत्थमभाणि दुःसहम् ॥

यदैव-यस्मिन्नेव काले प्रतापवाक्यक्रकचेन-प्रतापवाक्यारिणा निकृत्तमर्मा-विद्धहृदयः, स मानवान्-दृप्तो मानसिंहः, गमनोद्यतः-गन्तुमुद्यतः, अभवत्-अभूत; तदैव-तस्मिन्नेवकाले केनापि-केनचन कटुप्रलापिना-कटुवादिना एवम्-इत्थम् सुदुःसहम्-असह्यम्, वचः-वचनम्, अभाणि-उक्तम् ।

प्रताप के वचनों से विद्ध हृदय मानसिंह ज्यों ही जाने के

लिए उद्यत हुए उसी समय किसी कटुवादी ने इस तरह का कठोर वचन कहा –

अथाग्रपो मे भवेत् युन पुनः, सहैव नेयो भगिनीश्वरोऽपि सः ।
रणे हि दृष्ट्वा भवतः पराक्रमं, प्रसन्नचेता स महान् भविष्यति ॥

अथ–अनन्तरम्, मे–मक, भवते–तुभ्यम्, पुनः पुनः–साम्रेडम् आग्रहो वर्तते यत् सः–प्रसिद्ध, भगिनीश्वरोऽपि भगिनीपतिरपि, सहैव–साकमेव, नेयः–आनेयः, सः महान् रणेहि–संग्रामे, भवतः–तव, पराक्रमम्–शौर्यं दृष्ट्वा–विलोक्य, प्रसन्नचेत्ता–प्रसन्नः भविष्यति ।

आप से यह मेर बार-बार आग्रह है कि आप अपने बहनोई को भी साथ लायें । वह रण में आपके पराक्रम को देखकर प्रसन्न होगा ।

समन्ततः सन्तत–वाक्शरार्दितो, मुहुर्मुहुर्भोगिनिभो विनिःश्वसन् ।
करेण सम्पीड्य करं व्यथाऽऽकुलो, ससर्प दिल्लीनगरं स 'मान' दात् ॥

समन्ततः–सर्वतः संततवाक्शरार्दितः–सतत वाग्बाणैः तुदितः, मुहुर्मुहुः–बारं–बारम्, भोगिनिभः–सर्पमिव, विनिः श्वसन्–विशेषतो निःश्वासं गृह्णन् करेण–हस्तेन, करम्–हस्तम्, सम्पीड्य–मार्जयित्वा, व्यथाकुलः–वेदनाकुलः, सन् सः मानवान्–दृप्तः, दिल्ली नगरं–प्रति ससर्प–प्रजगाम ।

चारो ओर स वाग्बाणों से विद्ध होकर बार-बार सर्प के समान श्वास लेते हुए, हाथ से हाथ मींजकर वह दृप्त मानसिंह दिल्ली चला गया ।

## राणा–रणघोषणा:

इत परं मान–मतं विचार्य सः युगान्तकालाग्निसमः समुज्ज्वलन् ।
समस्त–सामन्त–जने जनेश्वरः समुज्ज्वलद्वह्नि-शिखोपमोऽब्रवीत् ॥

इतः परम्–एतदनन्तरम् मानमतम्–मानसिंहस्याभिप्रायम्,

विचार्य-विचारं कृत्वा, युगान्तकालाग्निसमः-प्रलयकालाग्नि सदृशः, समुज्ज्वलन्-प्रज्वलन् समुज्ज्वलद्वह्निशिखोपमः-देदीप्यमानाग्नि स्फुलिङ्गवत् सः, जनेश्वरः-राणाप्रतापः, समस्तसामन्तजने-सर्वेषां राज्याधिकरिणां समक्षम् अब्रवीत् ।

इसके पश्चात् मानसिंह के अभिप्राय को विचार करके प्रलयकाल की अग्नि की तरह जलते हुए प्रताप सिंह ने सभी सामन्तों से कहा ।

८५ अये ! स्वदेशोन्नतये धृतासवोऽस्त्ययं जनो वक्तुमना मनागतः ।
हृदि स्वकीये विलिखन्तु मद्वचः, स्वशक्तिराद्या शुचि-धर्म-साधिका ॥

अये हे स्वदेशोन्नतये-स्वदेशोत्कर्षवर्धनाय, धृतासवः धृतप्राणाः अयं जनः-अहम् (प्रतापसिंहः) मनाक्-किञ्चित्-इषत्, वक्तुमना अस्ति-वक्तुं कामयते । अतः-अतएव, स्वकीये-निजे; हृदि मद्वचः-मम वाणीम्, विलिखन्तु-उट्टंकयन्तु, यदस्माकम् स्वशक्तिः-आत्मशक्तिः आद्या-प्रथमा, शुचिधर्म-साधिका-पवित्रधर्मरक्षणसामग्रीभूता वर्त्तते ।

ऐ स्वदेश की उन्नति के लिए प्राण धारण करने वालों, मैं आपस कुछ कहना चाहता हूँ । अपने हृदय में अंकित कर लें कि हमारी अपनी शक्ति ही पवित्र धर्म की रक्षा का प्रथम साधन है ।

८६ न किं नु भूयो भविता समुन्नतिर्न दासता नस्त्वरितं गमिष्यति ।
वदन्तु शीघ्रं जननी च जन्मभूः, न किं पुनः सौख्यमयी भविष्यति ॥

किन्तु-किम् भूयः-पुनः समुन्नतिः-उत्कर्षो न भविता-नहि भविष्यति ? किं नः-अस्माकम्, दासता-पारतन्त्र्यम्, त्वरितम्, शीघ्रम्; नगमिष्यति-किम् ? पुनः-जननी-माता, जन्मभूश्च-मातृ-भूमिश्च, शीघ्रम् त्वरितम्, सौख्यमयी-आनन्दमयी, न भविष्यति ? इति वदन्तु ।

आप बताएं कि क्या हमारी समुन्नति नहीं होगी ? हमारी परतन्त्रता शीघ्र नहीं जा सकती ? क्या हमारी माता ओर मातृ भूमि शीघ्र आनन्दमयी नहीं होंगे ?

पपौ रणे यश्च किलोष्ण-शोणितं, नृ मूर्ति-धारी यम-लोक-शासनः ।
स भीमनामा रिपु-रक्त-रञ्जनः, न किं कुले नः प्रबभूव वीर-राट् ॥ ८६

नृमूर्तिधारी-मानवशरीरधारी, यमलोकशासनः-यमलोकप्रशासकः यः रणे-संग्रामे, उष्णशोणितम्-वत्रोष्णरक्तम्, पपौ किल, स रिपुरक्तरञ्जनः-शत्रुशोणितरसिकः भीम नामा-भीमनामकः वीरराट्-वीरवरः, नः-अस्माकम् कुले-वंशे, न प्रबभूव नह्यभूत् किम् ?

क्या हमारे वंश में मानव शरीरधारी, यमलोकप्रशासक वीरवर भीम नहीं हुए ? जिन्होंने संग्राम में शत्रु का गर्म-गर्म खून पिया था।

प्रशस्ततेजा अनघो दृढव्रतः, स राघवः किं न मदीय-वंशजः ।
निहत्य युद्धे किल योऽत्र रावणं, महीतलं चारु चकार शीतलम् ॥ ८७

प्रशस्ततेजाः-संस्तुत्यतेजस्वी अनघः-निष्पापः, दृढव्रतः-प्रतिज्ञ सः-प्रसिद्धः, राघवः-रामः मदीयवंशजः-अस्माकं वंशजो न किम् ? यः रामः अत्र-जगत्याम किल रावणम्-राक्षसेश्वरम् निहत्य-हत्वा महीतलम् जगत् शीतलम्-संतापरहितम् चारु-मनोज्ञञ्च, चकार-अकार्षीत् ?

क्या महातेजस्वी, निष्पाप तथा दृढ़ प्रतिज्ञ राम हमारे वंशमें नहीं हुए, जिन्होंने रावण को मारकर पृथ्वी को शीतल तथा मनोज्ञ बनाया ?

मदीयदेशोऽस्म्यहमेव भूपतिः, प्रसिद्धमेतद्वसुधातलेऽस्त्यलम् ।
कथं न लज्जाऽहह मां न बाधते, यदद्य देशो यवनैर्वशीकृतः ॥ ८८

अयम् मदीयदेशः-ममदेशोऽस्ति, अहमेवास्य देशस्य भूपतिः शासकः अस्मि । इतिएतत् वसुधातले - पृथिव्याम् अलम्-पूर्णरूपेण-

रूपेण प्रसिद्धमास्ते अहह्-खेदोस्ति, साम्-जनमेनम्, लज्जा--ह्री कथम्-कस्मात् नहि- नबाधते-लज्जन्वितं करोति यत् अयं देशः अद्य, यवनैः-तुरुष्कैः वशीकृतोऽस्ति ।

यह संसार में प्रसिद्ध है कि यह देश हमारा है और हम ही इसके राजा हैं। हमें इससे क्यों नहीं लज्जा होती कि. इसे यवनों ने परतन्त्र बना लिया है।

अघौघभाराज्जनता नताधुना, वधू-जने चापि विलासिताऽऽसिता ।
अहो दुरन्तः किल काल-चङ्क्रमः, यदद्य सर्वत्र विपत्युपक्रमः ॥

अधुना-इदानीम्, जनता-प्रजा, अघौघभारतः-पापसमूहभारतः नता- अभिभूता वर्तते. वधूजने-स्त्रीषु अपि, विलासिता-विषयोपभोगेप्सा, असिता-व्याप्ता। अहो-दुःखस्यास्ति विषयो यत् कालचक्रम कालक्रमः, दुरन्तः-दुरुल्लध्यः किल, यत् अद्य-साम्प्रतम् सवत्र विपत्युपक्रमः-विपत्तेः पदाधानम् अस्ति -वर्तते ।

आज जनता पाप समूह के भार से आक्रान्त है। नारियाँ विलासिनी हो गयी हैं। दुःख है कि काल का क्रम अनतिक्रमणीय है जिसके कारण आज सर्वत्र विपत्ति ही दिखती है ।

महोच्चलद्वारणवैरि-वारणाः! कथं नु यूयं किल शान्त-मानसा ।
पतङ्गवद् वह्निमुखं विविक्षवो, न यावदेते यवना दहन्त्यलम् ॥

हे महोच्चलद्वारणवैरिवारणः-महान्तः, उच्चलन्तः-प्रचलन्तश्च ये वारणाः-गजाः तद्वत् ये वैरिणः-शत्रवः तेषाँ-वारणाः-निरोधकाः, यूयम्-मेवाड़ 'वासिनः किल कथं नु-कस्मात् कारणात् शान्तमानसाः स्थिरचित्ताः सन्ति ? यावत् काल पर्यन्तम्, वह्निमुखम्-अग्नौ विविक्षवः-प्रविविक्षवः पतङ्गवत्-शलभवत् एते यवनाः अलम्-पूर्णरूपेण; वह्निम्-नहि, दहन्ति-दग्धा भवन्ति ।

ऐ विशाल हाथी के समान चलने वाले शत्रुओं को रोक देने वाले मेवाड़ वासियों, जबतक अग्नि में प्रवेश करने वाले कीड़ों के

समान यवन पूर्ण रूप से दग्ध नहीं हो जाते तब तक आप लोग शान्त कैसे हैं-? -६२

प्रियो यदि स्याद् भगवान् महामहाः; स एकलिङ्गोऽमर-वृन्दवन्दितः।
प्रिया यदि स्याल्ललनापवित्रता, प्रियो यदि स्याद् भवतामयञ्जनः ॥

यदि-चेत्, अमरवृन्दवन्दितः-देवगणवन्दितः, महामहाः-महैश्वर्यवान्, सः, भगवान्, एकलिंगः-शंकरः प्रियः-स्नेहपात्रम् स्यात्, यदि-चेत् ललनापवित्रता-योषितां पवित्रता, प्रिया स्यात्, यदि च एषःजनः-प्रतापसिंहः, भवताम्-युष्माकम्, प्रियः-प्रीतिभाजनम् स्यात्।

यदि महैश्वर्यशाली; भगवान्-शंकर प्रिय हों यदि नारियों की पवित्रता प्रिय हो, तथा-आप लोगों को यदि मैं प्रिय होऊं।

तदद्य सार्धं मयका रणाङ्गणे, प्रमत्तभावा समरे धृतायुधाः।
विधाय मानङ्गत-मान-मर्दनं, स्ववीरभूमिं कलयन्तु सर्वथा ॥ -६३

तदद्य-तर्हि अद्य, मयका—मया, सार्धम्-सह, रणाङ्गणे-समराङ्गणे, प्रमत्तभावाःधृतायुधा-गृहीतशस्त्राः, समरे-आजौ, मानङ्गतमानमर्दनम्-मानसिंहस्यमदप्रमोष, विधाय-कृत्वा, सर्वथा-सर्वतोभावेन स्ववीरभूमिम्-स्वकीयाम् वीराणां भटानाम् वसुन्धराम्-भूमिम् कलयन्तु अवगच्छन्तु।

वे आज मेरे साथ रणभूमि में प्रमत्तभाव से शस्त्रधारण करके लड़ाई में मानसिंह के मान मर्दन करके अपनी वीरों की भूमि को पहचानें।

धिग्ब्राह्मणं तमथ य श्रुति-मन्त्र-हीनः, धिक् क्षत्रियं तमथ यः समरेऽतिदीनः
धिग् वैश्यमर्थिजन-शोषणमात्र-पीनं, शूद्रं च धिक् सुजनसेवकताविहीनम् ॥ -६४

अथ तम्-ब्राह्मणम्-अग्रजम् धिक् - यः-ब्राह्मणः श्रुतिमन्त्र-हीनः वेदमन्त्रविहीनो वर्तते। अथ-किञ्च, तं क्षत्रियम्-बाहुजम् धिक् यः-क्षत्रियः, समरे-संग्रामे अतिदीनः—अत्यन्त आर्तो वर्तते। किञ्च अर्थिजनशोषणमात्रपीनम् - निर्धनजनपरिशोषणपरायणम् - वैश्यम्-ऊरुजम्

ऊरुजम् , धिक् च-किञ्च , सुजनसेवकताविहीनम् -सज्जनसेवापराङ्मुखम् शूद्रम् धिक् ।

अवेदज्ञ ब्राह्मण को धिक्कार है ,कायर क्षत्रिय को धिक्कार है, दोनों के शोषण में ही रत वैश्य को धिक्कार है तथा सज्जनों की सेवा से पराङ्मुख शूद्र को धिक्कार है ।

तिष्ठन्तु ते निज-गृहे ललना-विलासाः, ये वारुणी-विषय-वञ्चकतैकदारा ।
ये जन्मनैव खल-कर्म समर्थयन्ति , प्रोच्चैर्बलं शुचि-कुलं च कदर्थयन्ति ।।

ये-जनाः, ललनाविलासाः-स्त्रीभोगपरायणाः , सन्ति, ये च वारुणीविषयवञ्चकतैकविलासाः-केवल मद्यस्य भोगस्य प्रतारणायाः च परतन्त्राः सन्ति, ये च , जन्मनैव-जन्मत एव, खलकर्म-दुष्टानां कर्म समर्थयन्ति-अनुमोदन्ते , च-किञ्च, ये , बलम्-शक्तिम् शुचिकुलम् च , प्रोच्चैः-भृशम् , कदर्थयन्ति-दूषयन्ति , ते जनाः , निजे गृहे तिष्ठन्तु ।

जो लोग स्त्रियों के साथ भोग विलास , मदिरापान तथा भोगों में आसक्त होकर जन्म से ही निन्दित कर्मों का समर्थन करने वाले तथा अपनी शक्ति तथा पवित्र कुल को दूषित करने वाले हैं वे लोग घर में ही रहें ।

आयातु स प्रकटयन् बलमत्युदारम् कर्तुं समर्थं इह यो व्रतमासिधारम् ।
क्रीडास्थलीव किल य समरस्थली स्यात्,किंवा विषाद इह यस्य कृते प्रसादः।।

यः-जनः , इह-संग्रामे , असिधारव्रतम् कर्तुम् अनुष्ठातुम् , समर्थः-शक्तोऽस्ति , यं किल , समरस्थली-रणाङ्गणम् , क्रीडास्थली-मनोरञ्जनस्थली इव विनोदप्रदा स्यात् - किंवा-अथवा - इह यस्यकृते विषादः-शोकः प्रसादः-प्रसन्नता स्यात् इह सः-जनः, अत्युदारं-प्रशस्तम् बलम्-शौर्यम् , प्रकटयन्आयातु ।

जो संग्राम में असिधारव्रत (संग्राम) करने में समर्थ हो तथा जिसके लिए संग्रामस्थली क्रीडास्थली के समान सुखद हो जो

जो विषाद को ही प्रसाद समझे वह अपपा श्रेष्ठ वल अभिव्यक्त करते हुए मेरे साथ आये।

आयातु स प्रबलवानिह साभिमानं, कृत्वा स्वदेशचरणे मृदुमौलिदानम्।
वक्षःक्षतज्जनितशोणितबिन्दुभिर्यः, निश्शङ्कमङ्कयतु गौरवगर्वगानम्॥

यः प्रवलवान्–प्रकृष्टवानः, स्वदेशचरणे–स्वदेशस्य पादपद्मे, मृदुमौलिदानम्–मृदु–कोमलं यथा स्यात् तथा मौलिः–शिरसः दानम् कृत्वा, वक्षः क्षतात्–हृदयवेधात् जनितैःशोणितबिन्दुभिः–उत्पन्नरुधिरविप्रुड्भिः, निःशङ्कम्–शङ्कारहितम्, गौरवगर्वगानम्–गरिमाभिमानगीतम् अङ्कयतु–समुट्टंकयतु, सः–जनः, इह–रणभूमौ, साभिमानम्अयातु–आगच्छतात्।

जो श्रेष्ठ वीर अपने देश के चरणों पर अपने कोमल सिर को चढ़ाकर विद्ध हृदय से निकले हुए रुधिर से अपनी गौरव-गाथा को अँकित कर सके, वह साभिमान यहाँ आये।

सिन्दूरबिन्दुरिव भारत-भूमि–भालात् 'मेवाड़' एष पवनैर्यवनैर्विलुप्तः।
भूयोऽपि तं किल तथा परिरञ्जयेद्यः, आयतु तत्कृत इदं प्रणतं शिरो मे॥

यवनैः–तुरुष्कैः, सिन्दूरबिन्दुरिव एषः मेवाडः भारतभूमिभालात् भारतभूमिरेव नायिका तस्याः भालात्–ललाटात्, विलुप्तः–अपाकृतः यः किल स्वदेशभक्तः भूयः–पुनः, तम्–भारतभूमिभालं तथा–तथैव, परिरञ्जयेत्–समलंकुर्यात् सः आयातु। तत्कृते–तस्मै स्वदेशभक्ताय, मे–मम, इदम् शिरः–मूर्ध, प्रणतमास्ते इति शेषः।

यवन रूपी पवनों ने सिन्दूर की बिन्दु के समान इस मेवाड़ भूमि को भारत भूमि के ललाट से अपाकृत कर दिया है। जो उसको पुनःउसीप्रकार सुशोभित करे वही मेरे साथ आये। उसे मैं प्रणाम करता हूँ।

धन्याऽस्ति तेन जननीजनकोप्यनन्यो, वंशश्च तेन सुसमस्त-समस्त-तापः।
कीर्तिश्च तस्य भुवने भुवनकभूषा, प्राणान् समुत्सृजति यो निज-देश हेतोः॥

तेन पुरुषेण, जननी-माता, धन्या, जनकः-पिता अपि अनन्यः-अनुपमोऽस्ति, तेन वंशः-कुलम्, सुसमस्तसमस्ततापः-संतापरहितः कृतः, भुवने-लोके, च तस्य-देशभक्तस्य कीर्तिः-यशः, भुवनैकभूषा-लोकस्य प्रधानालंकारोऽस्ति यः-पुरुषः, निजदेशहेतोः स्वदेशरक्षणाय, प्राणान्-प्रसून, समुत्सृजति-त्यजति ।

उस पुरुष की माता धन्य है । पिता अनुपमेय है तथा वंश संतापरहित है जो देश के लिए अपने प्राणों का त्याग करता है ।

99 स्वच्छन्द-मन्द-गमना यवनाः गजाऽऽभाः नन्दन्तु तावदिह नन्दन-कानने मे ।
वक्षो-विदारणकरं निनदं विधाय यावन्न सर्पति महामृगराज एषः ॥

यावत्-यावत्कालपर्यन्तम्, एषः-अयम्, महामृगराज-महासिंहः वक्षोविदारणकरम्-हृदयविदरकम्, निनादम्-गर्जनम्, विधाय कृत्वा, न सर्पति-नहि आक्रमण कुरुते, तावत् गजाऽऽभाः-करिनिभाः, स्वच्छन्दमन्दगमनाः-स्वच्छन्द यथा स्यात् तथा मन्दम्-शिथिलम्, गमनम् येषां ते, यवनाः-तुरुष्काः, मे-मम, इह-अस्मिन् नन्दनकानने-इन्द्रवने, नन्दन्तु-आनन्दानुभव कुर्वन्तु ।

जब तक यह महासिंह हृदय विदारक गर्जना करके टूट नहीं पड़ता है तब तक हाथी के समान स्वच्छन्द एवं मन्द गमन करने वाले यवन हमारे नन्दन वन में सुखी हो लें ।

100 अद्यापि पश्यतु जगद्रघुवंशवीर्यं, ग्रन्थेषु मत्कृत इदं विलिखन्तु विज्ञाः ।
एकोऽपि कोपिततमः कतमः परेण, दिल्लीश्वरेण समरं समरीरचद्यत् ॥

अद्यापि-सम्प्रत्यपि, जगत्-लोकः; रघुवंशवीर्यम्-रघुवंशपराक्रमम्, पश्यतु-अवलोकयतु । विज्ञाः-विद्वांसः, मत्कृते-मह्यम् ग्रन्थेषु-निबन्धेषु, इदम् विलिखन्तु-लिखन्तु, यत् कोपिततमः क्रुद्धतमः कतमः-कश्चन एकः अपि-एकाक्यपि, परेण-महता, दिल्लीश्वरेण-अकबरेण सह, समरम्-संग्रामम्, समरीरचत्-रचयामास ।

संसार आज भी रघुवंश का बल देखे । विद्वान् मेरे लिए

ग्रन्थों में यह लिखे कि क्रुद्ध होकर किसी एक वीर ने अकेले महान् दिल्लीश्वर के साथ संग्राम किया।

तदैव सैन्ये सहना समविशत् तडित्प्रभः साहस एव मूर्तिमान्। १११
जयेति शब्देन सरोप-घोपणो, रवोऽभवच्छस्त्र ततिप्रताडिता॥

तदैव-तदात्वे, सैन्ये-सेनायाम्, सहसैव-अकस्मादेव, तडित्प्रभः-विद्युदिव, साहसः-उत्साहः, स माविशत्-प्रविवेश। जय इति शब्देन-ध्वनिना, सरोष-घोषणा-सक्रोधघोषणायुक्तः, शस्त्रतति प्रताडितः-शस्त्रसमूहझंकृतः, रवः-घोषः अभवत्-अभूत्।

उसी समय अचानक सेना में मूर्तिमान् उत्साह ने प्रवेश किया और जय जयकार के साथ शस्त्रों की झंकार भरी क्रुद्ध रण घोषणा की ध्वनि गूंज गयी।

स 'एकलिङ्गो' भगवाञ्जयत्वलम्, जयत्वलं भारत-मा महीयसी ११२
प्रतापसिंहो विजयो जयत्वलं तद्बलवत्तरं बलम्॥

सः-प्रसिद्ध, भगवान्-ऐश्वर्यशाली एकलिङ्गः-शंकरो अलम् जयतु-विजयताम्। महीयसी-गरीयसी, भारतमा-भारतमाता, जयतु-विजयताम् विजयी प्रतापसिंहः अलम् जयतु-विजयताम् तद्बलत्तरम्-तस्य-प्रतापसिंहस्य, बलवत्तरम् श्रेष्ठशक्तिसम्पन्नम् बलम्-सैन्यम्, अलम् जयतु-पूर्णरूपेण विजयताम्।

भगवान एकलिङ्ग की जय हो, महामहिमावती भारतमाता की जय हो, विजयी प्रतापसिंह की जय हो तथा महाबलशाली उनकी सेना की जय हो।

## रणाङ्गणे राणाप्रतापः

प्रतापसिंहस्य महोत्तमं यशः, रिपूच्छलच्छोणित-शोणलेखनैः। ११२
शिलोच्चये भाति यदीकेऽङ्कित, प्रिया न कं सा किल हल्दिघाटिका॥

यदीयके-यस्याः, शिलोच्चये-उपलसमूहे, रिपुच्छलच्छोणित

शोणलेखनैः-रिपूणाम्-शत्रूणाम् उच्छलाद्भिः-स्रवद्भिः, शोणितैः रुधिरैः यानि शोणानि रक्तानि, लेखनानि-अंकनानि तैः अंकितम्, लिखितम्, प्रतापसिंहस्य-महोत्तमम्-श्रेष्ठानुपमम् यशः कीर्तिः भाति-शोभते, सा किल हल्दिघाटिका-हल्दीघाटी नाम्नी समर-स्थली कम्-पुरुषम् न प्रिया-प्रियतमा ।

जिसके शिला समूह पर निकलते हुए शत्रुओं के खून से प्रतापसिंह का यश लाल अक्षरों में अंकित है वह हल्दीघाटी किसको प्रिय नहीं है ।

११४ अरावली यां समवाप्य सुन्दरी, सुहल्दिघाटी प्रथिता रणस्थली ।
परस्परं सा भुवि योद्धुकामतः प्रवर्तमानोभयपक्षतोऽभवत् ॥

यां समवाप्य-प्राप्य सुहल्दिघाटीति नाम्ना-संज्ञया, प्रथिता-प्रख्याता, सुन्दरी-मनोरमा, सा रणस्थली-रणस्य प्राकृताभूमिः, अरावली-पर्वतमाला, भुवि-लोके, उभयपक्षतः पक्षद्वयात्, परस्परम् -मिथः, योद्धकामतः-युद्धेप्सया प्रवर्तमाना-प्रवृत्ता, अभवत्-अभूत् ।

जिसे प्राप्तकर हल्दीघाटी के नाम से प्रसिद्ध वह मनोरमा रणभूमि अरावली पर्वत माला में दोनों पक्षों से (मानसिंह तथा प्रतापसिंह के बीच) युद्ध प्रारम्भ हुआ ।

११५ क्व लक्षशो भारतभाररूपिणः प्रकामचाराः यवना मदोद्धताः ।
क्व जन्मभू-भार-निवारणे रताः जनाः कियन्तो धृत-सङ्गर-व्रताः ॥

मदोद्धताः-दर्पोन्मत्ताः प्रकामचाराः-स्वेच्छाचारिणः, यवनाः भारतभाररूपिणः-भारतवर्षस्य भारस्वरूपाः लक्षशः-लक्षसंख्याकाः यवनाः-तुरुष्काः क्व ? क्वच, जन्मभूभारनिवारणे रताः-जन्मभूमेः भारस्यापाकरणाय धृतसंग्रामैकव्रता-संग्रामैकपरायणाः कियन्तः-अल्पीयांसः-पुरुषाः क्व । उभयोर्महदन्तरमास्ते ।

कहाँ तो दर्पोन्मत स्वेच्छाचारी भारतभूमिके भारस्वरूप लाखों

यवन और कहाँ अपनी मातृ भूमि के भार को दूर करने में संलग्न युद्धव्रत करने वाले मुठ्ठी भर लोग। दोनों दलों की कोई समता नहीं।

तथापि जातं समरं तथाविधं, यदद्यकालेऽपि तदुल्वण-प्रभाम्। ११६
विलिख्य मौनं स्वशिलातलेष्वल, चिरादहो रौति अरावलीस्थली ॥१०७॥

तथापि-पुनरपि, तत् समरम्-संग्रामम् तथविध-तत्प्रकारकं जातम् अभूत यद्, अद्याऽपि-इदानीमपि 'अरावली' स्थली अरावली पर्वत-माला, स्वशिलास्थलेषु-स्वदृषदपट्टेषु, अलम्-पर्याप्तम् उल्वणप्रभाम्-देदीप्यमानकान्तिमयीं, विलिख्य-लिखित्वा, चिरात् दीर्घकालात्, मौनम्-निश्शब्दम्, रौति।

फिर भी वह युद्ध ऐसा हुआ कि अरावली पर्वतमाला अपने पाषाण खण्डों पर प्रभा रूप से उसे अंकित करके आज भी मन ही मन रो रही हैं।

जनुःप्रदात्री जननी वसुन्धरा, जल-प्रवर्षा-मिषतो रणस्थले। ११७
निरीक्ष्य सूनून् मरणाय तत्परान्, सुतान् परावर्त्तयितुं मनोऽकरोत् ॥

जनुः प्रदात्री-जन्मदात्री, जननी-माता, वसुन्धरा-पृथिवी रणस्थले-संगरभुवि जल प्रवर्षामिषतः-जलवर्षण-व्याजेन, सूनून्-पुत्रान् मरणाय-जीवितत्यागाय, तत्परान्-समुद्यतान्, निरीक्ष्य-वीक्ष्य, पुत्रान्-आत्मजान् परावर्तयितुम्-निवारयितुम् मनः अकरोत्-ऐक्षत।

जन्मदात्री माता पृथवी ने मरने के लिए तैयार अपने पुत्रों को देखकर वर्षा के बहाने उन्हें लौटाना चाहा।

स-रक्त मांसाञ्चितसद्वसुन्धरा-निरीक्षणे ह्यऽक्षमतामुपागतः। ११८
कुयुद्धतः पूर्वमहो महोनिधिः निमीलिताक्षः सहसाऽभवद्रविः ॥

हा! कष्टम् महोनिधि-तेजोनिधिः, रविः-सूर्यः, सरक्तमांसाञ्चितसद्वसुन्धरानिरीक्षणे-रुधिर मांसादिभिःपूर्णाम् सद्भूमिम्

अवलोकने, अक्षमताम्-असमर्थताम्, उपागतः-प्राप्तः, अतएव सः कुयुद्धतः-अनभिप्रेतात् संग्रामात्, पूर्वमेव-अर्वागेव, निमीलिताक्षः-अस्तः अभवत्-समजायत ।

हाय महातेजस्वी सूर्य भी रक्त मांस से भरी हुई पृथिवी को देखने में असमर्थ होकर युद्ध प्रारम्भ होने से पहले ही अस्त हो गये ।

१०९ तदैव युद्धोदयकाल-सूचकः, समुत्थितो दुर्धर-दुन्दुभि-ध्वनिः ।
क्षणेन सा सुन्दर-हल्दिघाटिकाऽतिभीमहुङ्कारमयी तदाऽभवत् ॥

तदैव-तदात्वे एव, युद्धोदयकालसूचकः-युद्धारम्भ-समयसूचकः, दुर्धरदुन्दुभि-ध्वनिः-भयंकर दुन्दुभिध्वनिः समुत्थितः-आविर्भूत । तदा-तदात्वे सुन्दरहल्दिघाटिका-मनोज्ञा हल्दीघाटी क्षणेन-क्षणमात्रेणैव अतिभीमहुंकारमयी-अतिभयकर हुंकारमयी अभवत्-अभूत् ।

उसी समय युद्धारम्भ को सूचित करने वाली नगाड़ों की भयंकर ध्वनि हुई और मनोज्ञ हल्दीघाटी भी क्षण भर में भयंकर हुंकारों से भर गयी ।

११० तदैव सैन्ये रण-रोष-लक्षणो, विलक्षणो वैरिचमूनिषूदनः ।
स वीरताया निकषोपलोऽमलो, ननाद वेगेन निसर्ग-निष्ठुरः ॥

तदैव-तस्मिन्नेव काले, रणरोषलक्षणः-संग्रामजन्य रोषस्वरूपः वैरिचमुनिषूदनः शत्रुसैन्यसंहारकः वीरतायाः निकषोपलः-शाणः निसर्गनिष्ठुरः-स्वभावरूक्षः विलक्षणः-अद्भुतः अमलः-निर्मलः सः-प्रतापसिंहः सैन्येऽसेनायाम् वेगेन-जवेन ननाद-जगर्ज ।

उसी समय युद्धजन्यक्रोधाविष्ट शत्रुसेना का संहारक की कसौटी स्वभावतः कठोर अद्भुत तथा स्वच्छ प्रतापसिंह ने सेना में जोर से गर्जना की ।

११२ भुवं भ्रुकुट्या भृशमाविभीषयन् भुजङ्गभीमाऽमितभूति-भूषितः ।
विघातुकामः प्रलय भयङ्करं लयङ्करं किं भव एव भात्ययम् ॥

भृकुट्याँ-भ्रू विलासेन भुवं-पृथिवीम् भृशम् अत्यन्तम् आविभीषयन्-सर्वतो भयमुत्पादयन् भुजङ्गभीमः-भुजङ्गेन सर्पेण भीमः भयंकरः प्रतापपक्षे च-सर्पवद्भयंकरः अमितभूतिभूषितः-अनल्पविभुत्यलंकृतः प्रतापपक्षे च त्रिपुण्ड्रेण विराजितः भयंकरम्-घोरम् प्रलयम्-संहारम्-शत्रुविनाशं वा विधातुकामः-कर्तुकामः लयंकरः-प्रलयंकरः अयम्-पुरोदृश्यमानः भवः-शंकर एव भाति-शोभते किम् ?

ये अपनी भौंहवों के विलासमात्र से पृथिवी में अत्यन्त भय को लाने वाले भुजङ्गों से भयंकर विभूतिभूषित भयंकर प्रलय करने की इच्छा वाले स्वयं भगवान् शंकर ही विराजमान हैं क्या ?

सुरासुराणामथवाऽत्र सङ्गरे, स्ववर्गसम्पाद्यविधेः सहायकः 113
समागतः किं सहसा स-सम्भ्रमः सशस्त्र एषः सुर सैन्य-नायकः ॥

अथवा सुरासुराणाम्-देवासुराणाम् अत्र-अस्मिन्-साँगरे-संग्रामे सहसा-अकस्मात् स्ववर्गसाँराद्यविधेः-स्वपक्षकृत्यविधेः सहायकः-कर्ता, ससम्भ्रमः-सहसा सशस्त्र-शस्त्रधरः एषः-अयम् सुरसैन्यनायकः-देवगणाधिपः समागतः किम् ।

क्या उस देवासुर संग्राम में अचानक देवताओं के कार्य को करने वाले स्वयं देवगणाधिप शस्त्र धारण करके आ गये हैं क्या (प्रतापसिंह के वेष में)

प्रहर्तुकामोऽरि-बलम् सुविह्वलम्, स विग्रह विग्रहो एष साऽऽग्रहः 114
स्ववज्र-निर्घोष-पुरस्सरोऽथवा, विराजते वज्र-धरम् विडम्बयत् ॥

अथवा सुविह्वलम्-अत्यन्तातुरम् अरिबलम्-शत्रुसैन्यम् प्रहर्तुकामः हन्तुकामः वज्रधरम्-इन्द्रम् विडम्बयन्-अनुकुर्वन् स्ववज्र-निर्घोषपुरस्सरम्-स्वपरिवरवपूर्वकम् साग्रहः एषः-अयम्, विग्रहः-युद्धः विराजते-शोभते ।

अत्यन्त विकल शत्रुसेना पर प्रहार करने की इच्छा से

वज्रधारी इन्द्र का अनुकरण करने वाला अपने वज्र के घोष द्वारा हठ पूर्वक यह युद्ध सुशोभित हो रहा है।

मदोत्कटो मानि-महत्त्व-मर्दनः, समुष्टिबन्धो जनमारण-व्रती ।
मुहूर्तमात्रस्य कृते महीङ्गतो, महाङ्गधारी किमयं महार्जुनः ॥

मदोत्कटः मदोन्मत्तः मानिमहत्त्वमर्दनः-दृप्ताभि-मानदलनः समुष्टिबन्धः-मुष्टिकाबन्धयुक्तः जनमारणव्रती-शत्रुसंहारपरायणः अयम्-प्रतापसिंहः मुहूर्तमात्रस्य-कृते-कस्मैचन कालाय महीगतः-पृथिव्याम् महाङ्गधारी-विशालकाः महार्जुनः-कार्तवीर्य संजात किम ?

मदमत्त मानियों के मान को दूर करने वाले मुष्टि बाँधे हुए शत्रुओं को मारने के व्रतवाले ये (राणाप्रताप) पृथिवी पर आये हुए विशालकाय कार्तवीर्य अर्जुन हैं क्या ?

## कुन्तकौटिल्यम्—

मनस्वि-मानोन्नत-मौलि-खण्डकः, स्वदीप्ति-सम्भासित-सर्वदिङ्मुखः ।
प्रतापहस्ते प्रतपन् प्रतापवान् न कस्य कुन्तः कृतवान् प्रकम्पनम् ॥

मनस्विमानोन्नतमौलिखण्डकः-दृप्तानाँ दर्पोन्नतमस्तकानाम् छेदकः स्वदीप्तिसम्भासितसर्वदिङ्मुखः-स्वकान्त्या सर्वदिशाम् प्रकाशकः प्रतापहस्ते-प्रतापसिंहस्य पाणौ प्रतपन्-प्रकाशमानः प्रतापवान्-प्रतापी कुन्तः-भल्लः कस्य-शत्रोः प्रकम्पनम्-वेपनम् न कृतवान्-अकार्षीत् ?

अभिमानियों के दर्पोन्नतमस्तक को काटने वाला, अपनी कान्ति से सभी दिशाओं को प्रकाशित करने वाला तथा प्रताप-सिंह के हाथ में चमकने वाला भाला किस शत्रु को नहीं कँपा दिया ?

रणाङ्गणे कः खलु वीक्ष्य तं भयाज्जहावसून्नैव भटोद्भटोऽपि सन् ।
न तेजसा तत्रभवेण केऽभवन् स्थितः सुदूरेऽपि विदीर्णवक्षसः सः

भटोद्भटोऽपि-वीरवरोऽपि सन्, रणाङ्गणे-आजौ, तम्-भल्लम् वीक्ष्य-दृष्ट्वा, कः खलु-शत्रुः, भयात् असून्-प्राणान्, न जहौ-नहि, तत्याज ? सुदूरेऽपि-अतिदूरेऽपि, स्थिताः-विद्यमानाः केशत्रवः तत्प्रभावेण-भल्लजन्येन तेजसा-महसा, विदीर्णवक्षसः-विदीर्णहृदयाः, न अभवन्-अभूवन् ।

लड़ाई के मैदान में उस भाले को देखकर किस शत्रु के प्राण भय से नहीं निकल गये ? उसके तेज से किस अति दूरस्थ शत्रु का भी हृदय नहीं विदीर्ण हो गया ।

तृणीकृतास्त्रः स तडित्ततिप्रभः, तुरुष्कजान् तुच्छतमान्प्रताडयन् । ११८
त्विषामधीशस्तरसाऽथ ताण्डवे, त्रिलोचनस्याऽनुचराभ आवभौ ॥

अथ-अनन्तरम्, तृणीकृतास्त्रः-अवमानितास्त्रसमूहः, तडित्ततिप्रभः-विद्युतां समूह इव कान्तिमान् तुच्छतमान्-क्षुद्रान, तुरुष्कान्-यवनान्, प्रताडयन्-मारयन्, त्विषामधीशः-ज्योतिषां नियामकः, सः-कुन्तः तरसा-वेगेन, ताण्डवे-ताण्डवाख्ये नृत्ये त्रिलोचनस्य-शंकरस्य, अनुचराभः-अनुचरसदृशः, आवभौ-शुशुभे ।

इसके पश्चात् अस्त्रसमूहों को नगण्य करते हुए विद्युत समूह के समान कान्ति वाला क्षुद्र यवनों को मारते हुए ज्योतियों का स्वामी वह कुन्त ताण्डव नृत्य में लगे शंकर के अनुचर सा प्रतीत हो रहा था ।

निमेषमात्रेऽगणितान् विनाशयन्, निशाचराऽऽभान् यवनान् निरन्तरं । ११९
निभालयन् नाकनिकेतनातिथीन, ननर्त्त नासीर-गतो नटेन्द्रवत् ।

निमेष मात्रे-क्षणमात्रे, अगणितान्-असंख्यान्, निशाचराभान्-राक्षससदृशान् यवनान्-तुरुष्कान, निरन्तरम्-सततम् विनाशयन्-मारयन् नाकनिकेतनातिथीन्-मृतान्, निभालयन्-पश्यन् नासीरगतः सेनामुखंगतः, नटेन्द्रवत्-शिववत्, ननर्त-नृत्यतिस्म ।

क्षणभर में असंख्य राक्षस तुल्य यवनों को सदा मारते हुए

मरे हुए को देखते हुए सेना के अग्रभाग में शंकर के समान नृत्य करने लगे ।

सुधाम धम्मां रणधीर-धर्षणो, धुतारि-पक्षो द्विजधर्म-पक्षपाः ।
ध्रुवं धरा-धेनुक-धीमतां कृते, कृतेश एष श्रितवेष-पेशलः ॥

धाम्नाम्-तेजसां सुधाम-आश्रयः रणधीरधर्षणः-संग्रामधीराणांतिरस्कर्त्ता, धुतारिपक्षः-विनाशितशत्रुबलः, द्विजधर्मपक्षपाः-ब्राह्मणानाम् धर्मस्य च रक्षकः । एषः-कुन्तः, धराधेनुकधीमताम्-कृते-पृथ्वी-गोविदुषाम् कृते, श्रितवेषपेशलः-मनोज्ञवेषवान्, ध्रुवं-निश्चितरूपेण, कृतेशः-यमः, एव ।

तेजों के आश्रय, रणधीरों को भी तिरस्कृत करने वाला, शत्रुओं का विनाशक, ब्राह्मणों गो तथा विद्वानों के लिए मनोहर भाला निश्चय ही यमराज के समान था ।

सुरक्त-सत्केशर-रङ्गरञ्जितः, सुचामरश्चञ्चल-चन्द्रहासभः ।
सुधीर-हस्त-व्यंजितः सहस्रधा, जहार हंहो ! हृदयं न कस्य सः ।

सुरक्त सत्केशररङ्गरञ्जितः-सुरक्तम्-रुधिरमेव सत्केशरम् तस्य रगेण रञ्जितः, सुचामरः-सुष्ठुचामरइव; चञ्चल चन्द्रहासभ्-चञ्चलकृपाणसदृशकान्तिवान् सुधीरहस्तव्यंजितः-सुधीरस्यप्रतापसिहस्य हस्तेन व्यंजितः-चालितः, सः-कुन्तः, हंहो-अरे ! कस्य शत्रोः हृदय, सहस्रधा-अनेकधा न जहार-हृतवान् ।

रुधिर रूपी केशर के रंग से रंजित सुन्दर चामर के सदृश चञ्चल तलवार के समान तथा प्रताप सिंह के हाथों से चलाया गया वह भाला किस शत्रु के हृदय को हजारों बार नहीं हर लिया ।

प्रभञ्जनस्याऽपि जव विभञ्जयन्, प्रदर्शयन भीममसीमसाहसम् ।
प्रताप-कुन्त कुटिलान् प्रकर्तयन्, न कम् समामुकितवानशङ्कितः ॥

प्रतापकुन्तः-प्रतापसिंहस्य भल्लः प्रभञ्जनस्यापि-वायोरपि, जवम्-वेगम्, विजयन्-अतिक्रमन्, भीमम्-भयकरम्, असीम-

साहसम्–सीमातीतसाहसम्, प्रदर्शयन्–प्रकटयन्, कुटिला–जिह्मान् प्रकर्तयन्–विखण्डयन् अशङ्कितः–निःशंकः, सन् कम्–शत्रुम् न समातङ्कितवान्–भीतिभीतं चकार।

वायु के भी वेग को लाँघने वाला, भयंकर तथा सीमातीत साहस को प्रदर्शित करके कुटिल शत्रुओं को मारने वाला प्रतापसिंह का भाला किसको नहीं भयभीत कर दिया।

अलक्षि विद्युत्फलकोपमः परैरतर्कि तर्ककथनैर्यमोऽपरैः।
अमानि कैश्चिच्च पलायनेपरैः, सुदर्शनो दर्शन मात्र-कातरैः॥

प्रतापसिंहस्य भल्लः रणे परैः–शत्रुभिः, विद्युत्फलकोपमः–विद्युत्फलकसदृशः, अलक्षि दृष्टः, अपरैः–भिन्नैः, तर्ककथनैः–तार्किकैः यमः–यमराजः अतर्कि–तर्कितः दर्शनमात्रकातरैः–अवलोकनमात्र, भयभीतैः पलायनपरैः कैश्चित्–अन्यैः सुदर्शनः–चक्रम् अमानि च।

प्रतापसिंह के भाले को कुछ लोगों ने विद्युत फलक के सदृश माना, कुछ तार्किकों ने उसे यमराज माना, कुछ देखकर ही भयभीत होकर भागने वालों ने उसे सुदर्शन चक्र माना।

समुज्ज्वलोऽप्यप्रिय-रक्त-रञ्जनो विलम्बिदेहोऽप्यविलम्ब-घातकः।
अथैकलः सन्नपि पञ्चतामयन्नयं जयं कस्य न चेतसोऽकरोत्॥

समुज्ज्वलोऽपि–निर्दोषोऽपि, अप्रियरक्तरञ्जनः–अप्रियप्रेमासक्तः इति विरोधाभासः, परिहारस्तु–उज्ज्वलवर्णोऽपि शत्रुरुधिररञ्जितः विलम्बिदेहोऽपि-आलस्ययुक्तोऽपि अविलम्बघातकः इति विरोधाभासः परिहारस्तु–आयताकारोऽपि शीघ्रं शत्रुविनाशः; एकलोऽपि एकाक्यपि पञ्चताम् अयन्–प्राप्नुवन् इति विरोधः, परिहारस्तु–एकाक्यपिशत्रून्–पञ्चताम्–मृत्युं प्रापयन्। कस्य चेतसः–हृदयस्य, जयम्–विजयम् नाकरोत्।

उज्ज्वल वर्ण होकर भी शत्रु के खून से सने हुए आयताकार होकर भी शीघ्र शत्रुओं का विनाश करने वाला, अकेला भी

शत्रुओं को मारने वाला यह प्रताप सिंह का भाला किसके हृदय का हरण नहीं कर लिया।

व्यलोकि सीमातिग एष यैरलं, पुनर्न तैरेतददर्शि भूतलम्।
स्वयम्प्रतापोऽपि चमच्चकार तां, विलोक्य कुन्तार्जित-सिद्ध-वीरतां॥

यै:-शत्रुभिः, एषः-अयम् अलम्-पूर्णतया, सीमातीतः-असीमितः व्यलोकि-दृष्टः तैः एतत् भूतलम्-पृथ्वीम् पुनः-भूयः न अदर्शि दृष्टम् प्रतापः अपिताम्-पूर्वोक्ताम् कुन्तार्जितसिद्धवीरतां भल्लोपार्जितसिद्ध वीरतां विलोक्य-दृष्ट्वा स्वयम् चमच्चकार-आश्चर्यचकितोऽभूत्।

जिन शत्रुओं ने इस भाले को देखा उन सबों ने फिर पृथ्वी का नहीं देखा (अर्थात् भाले के प्रहार से मर ही गये।) प्रतापसिंह भी भाले द्वारा अर्जित अपना इस सिद्ध वीरता को देखकर आश्चर्य चकित हो गये।

## चेतकचंक्रमणम्

निशम्य राणा-कृत-कुन्तटङ्कृतिं, स चेतकश्चारु चकार हुङ्कृतिम्।
उदग्रवेगोच्छलदच्छ केशरः, चचाल युद्धेऽप्यचलां प्रचालयन्॥

सः-प्रख्यातः चेतकः-प्रतापाश्वः राणाकृतकुन्तटंकतिम्-प्रतापकृतभल्लध्वनिम् चारु-मनोहराम हुङ्कृतिम्-ह्रेषाम्, चकार अकार्षीत् किञ्च उदग्रवेगोच्छलदच्छकेसरः-श्रेष्ठरयजन्य चचलस्वच्छायालः सः युद्धे-रणे, अचलाम्-पृथिवीम्, अपि प्रचालयन्-प्रकम्पयन् चचाल।

प्रताप के भाले की आवाज को सुनकर वह चेतक भी मनोहर हिनहिनाहट किया और श्रेष्ठ वेग के कारण चंचल आयालों वाला वह रण में पृथ्वी को कँपाते हुए चला।

प्रमत्त आशीविषवत् समन्वयन् निवन्धयंश्चापि महामतङ्गजान्।
प्रतापसिंहाश्रित-पृष्ठभीषणः, रणाङ्गणे रिङ्गमाततान सः॥

प्रतापसिंहाश्रितपृष्ठभीषणः-प्रतापसिंहाध्यासितपृष्ठवान भयंकरः प्रमत्तः-मदमत्तः, सः चेतकः, आशिविषवत्-सर्पवत्, समन्धयन् -फुत्कुर्वन्, महामतंगजान्-महाहस्तिनः अपि निबन्धयन्-प्रधर्षयन् रणाङ्गणे-रणभूमौ, रिङ्गणम्-संचारम् । आततान-विस्तारयामास ।

प्रतापसिंह के पीठपर बैठे रहने के कारण भयंकर मदमत्त चेतक, सर्प की तरह फुत्कार करता हुआ लड़ाई में बड़े-बड़े हाथियों को भी पछाड़ता हुआ घूम रहा था ।

खुराग्रभागेण विदारयन् भुवं, निशामयंश्चाप्रियभैरवं रवम् ।
क्षणप्रभोत्पात-निपात-चञ्चलः न कं चकाराऽऽतंतरं स चेतकः ॥१२८

खुराग्रभागेन,-शफाग्रेण, भुवम्-पृथिवीम्, विदारयन्-उत्खनन् अप्रियभरवं-शत्रुभ्योभयकरं, रवम्-शब्दम्, निशामयन्-श्रावयन् च क्षणप्रभोत्पातनिपातचञ्चलः-क्षणिक-प्रभावल्याः उल्कायाः निपातवत् चपलः सः, चेतकः-कम्-शत्रुम् आतंतरम्-भीतिभीतम् न-नहि, चकार ?

खुर के आग्रभाग से पृथिवी को विदीर्ण करने वाला शत्रुओं को भयंकर आवाज सुनाने वाला, क्षण भर चमकने वाले उल्का पात के समान चञ्चल, चेतक ने किस शत्रु के हृदय को नहीं भयभीत कर दिया ?

अलक्षिताऽशान्त-गतागतिः सदा, रणाग्निमध्ये तृणे-पुञ्ज-दायकः ।
ननर्त वैरि-व्रज-मौलि-मण्डले, स मूर्तिधारी रणचक्रवक्रिमा ॥१२९

अलक्षिताशान्तगतागतिः-अनवलोकितेचते, अशान्ते-चञ्चले गतागतिः--गमनागमनं यस्याऽसौ, रणाग्निमध्ये-रणमेवाग्निः-वह्निः, तस्य मध्ये तृणपुञ्जदायकः-इन्धनसमूहप्रदाता, मूर्तिधारी सशरीरः चक्रवक्रिमा-रणे-युद्धे चक्रमिव वक्रिमा कौटिल्य यस्य सः-चेतकः, समराङ्गणे सदा-सर्वदा,-वैरिव्रजमौलिमण्डले-शत्रुसमूहस्य

शिरोमण्डले,ननर्त-नृत्यचकार ।

जिसके चंचल गमनागमन को कोई देख नहीं सका, रण रूपी अग्नि में इन्धन डालने वाला, शरीरधारी, लड़ाई में चक्र के समान टेढ़ा चलने वाला चेतक सदा शत्रुओं के सिर समूह पर नाच रहा था ।

चमूः समस्ता जडताङ्गता सकृत, निवात-निष्कम्पमभूद्रणाङ्गणम् ।
नभः स्थलाच्चङ्क्रमणां विधाय गां, यदा तरस्वी स जगर्ज वाजि-राट्

यदा-यस्मिन् समये, सः तरस्वी-वेगवान् वाजिराट् चेतकः, स्थलात् भूमेः नभः--आकाशम् पुनः गाम्-भूमिम्, चङ्क्रमणाम्-कूर्दनम्, विधाय-कृत्वा, जगर्ज-ननाद, तदा समस्ता-सकला चमूः-सेना, सकृत्-एकदा जड़तां गता-किंकर्तव्यम् विमूढाऽभूत् रणाङ्गणम्-रणभूमिश्च-निवातनिष्कम्पम् स्तब्धम्, अभूत् ।

जब वह गतिशील वाजिराट् चेतक पृथ्वी से आकाश में पुनः पृथिवी पर कूदकर गर्जा तो सारी सेना एक बार किं कर्तव्य विमूढ हो गयी तथा समरांगण शांन्त हो गया ।

य एव उद्ग्रीव-जनो रणेऽभवत् क्षणेऽभवद्धूलिमयो धरा-धृतः ।
विदार्य वक्षश्च तदीयमत्यहो ! ययौ सः मृत्योः समरेऽग्रदूतताम् ॥

रणे-समरे, य एवं उद्ग्रीवजनः उन्नतशिरस्कः शत्रुः अभवत्-अभूत् सः-क्षणे-क्षणेन, धराधृतः-पृथिवींगतः, धूलिमयः -मृतः अभवत् । अहो सः-चेतकः तदीयम्-शत्रोः- वक्षश्च-हृदयम् अतिविदार्य-अत्यधिकं विक्षतं कृत्वा मृत्योः-यमस्य, अग्रदूतताम्-श्रेष्ठ दूतताम् ययौ-अगात् ।

लड़ाई में जिसने अपनी गर्दन, उठाई क्षण भर में वह पृथिवी पर गिरकर धूलिमय हो गया । और चेतक भी उसके हृदय को अत्यधिक फाड़कर यम का श्रेष्ठ दूत बन गया ।

स्फुरच्छटोऽनभ्र-तडित्प्रगर्जनः, महामद-भ्रान्त-विलोचनाञ्चलः ।
प्रचण्ड-कण्डूतिमलं रणज्ञता, विनाशयामास सहास-चीत्कृतैः ॥

स्फुरच्छटः-देदीप्यमानशोभः, अनभ्रतडित्प्रगर्जनः निरभ्राकाशे विद्युदिवगर्जनः महामदभ्रान्तविलोचनाञ्चलः-महांश्चासौ मदः तेन-भ्रान्तो-चकित विलोचनस्य-नेत्रस्य अञ्चलम्-प्रान्तम् यस्यासौ सः चेतकः रणज्ञता-समरसवन्विनीम् प्रचण्डकण्डुतिम्-उदग्राम् खर्जूम्, सहासचित्कृतैः-हासयुक्तचित्कारैः अलम्-पूर्णतया विनाशयामास-नष्टांचकार ।

देदीप्यमान मेघरहित आकाश में बिजली की तरह गरजने वाला महानमद के कारण जिनके नेत्र चकित थे, उस चेतक ने युद्ध की खुजली को अपने हासपूर्ण चित्कारों द्वारा पूर्ण रूप से मिटा दिया ।

धुरन्धरेण ध्वनिनाऽप्रधर्षिणा, चञ्चलेनाऽऽचलनेन चारुणा ।
विपक्ष-पक्ष-क्षतिकारिणाऽङ्घ्रिणा, स चेतकोभूद्युधि चेतकोपमः ॥

धुरन्धरेण-श्रेष्ठेन अप्रधर्षिणा-अपराजेयेन ध्वनिना-ह्रेषया, चारुणा-मनोज्ञेन, चञ्चलेन-तेजो गत्या आचलनेन-सर्वत्रगमनेन विपक्षपक्षक्षतिकारिणा-शत्रु विनाशकारिणा, अंघ्रिणा-चरणेन सः प्रख्यातः, चेतकः-प्रतापसिंहस्याश्वः, युधि-समरे, चेतकोपमः-अनुपमेयः, अभूत-अभवत् ।

श्रेष्ठ तथा अपराजेय मनोहर हिनहिनाहट एवं चंचल गति के पैरों से अपने शत्रुओं का विनाश करने वाला चेतक अनुपमेय बन गया था ।

यं न मन्ये किल तं मनोजवं, मनो-जवं म्लेच्छरणे समागतम् ।
यतो न चोच्चैर्न पुरो न पृष्ठतः ददर्श यं कोऽपि नरो न रोषिणाम् ॥

किल-निश्चयेन, म्लेच्छरणे-तुरुष्कानां संगरे, समागतम्-आगतम्, मनोजवम्-मनोवद्वेगयुक्तम् तम्-चेतकम्, मनोजवम्-

हनुमन्तम्, कथम्-कस्मात् कारणात् नमन्ये-नाहं स्वीक्रिये। यम् रोषिणम्-रोषयुक्तमश्वम् कोऽपि नरः-मनुष्यः, अधः न-पृथिव्याम् नहि-ददर्श अवलोकितवान्। तस्यातिचंचलत्वात्।

यवनों के साथ लड़ाई में मन के सदृश तीव्र वेग वाले चेतक को हम हनुमान क्यों न मानें, क्रोधाविष्ट जिसे किसी ने न तो नीचे और न ऊपर न तो आगे और न पीछे देखा। (अत्यन्त चांचल्य के कारण।)

अहो! मदीया जड़ लौह-लेखनी, कथा तदीया कथमत्र कथ्यताम्।
क्षणेन सा यच्छटया अरावली-दरी दरीदृश्यत एकदाऽरुणा॥

अहो-अरे, मदीया-मामकीना, जडलौहलेखनी-अचेतना लौह-निर्मिता च लेखनी वर्तते। अत्र-साम्प्रतम्, तदीया-चेतक-संबन्धिनी, कथा कथम् कथ्यताम् अनयेति शेषः। यच्छटया यस्य चेतकस्य शोभया, 'अरावली' दरी-गुफा, क्षणेन-क्षणकालेनैव, एकदा अरुणा-रक्ता दरीदृश्यत-दृष्टाभूत्। लङर्थो लट्।

मेरी यह जड़ तथा लौह लेखनी उस चेतक की कथा पूर्णरूप से कैसे लिखे? जिसकी छटा से वह अरावली की गुफा भी क्षण भर में लाल हो गयी।

प्रतापविजयः

त्वं छिन्धि भिन्धि परिदारय ताडय त्वं, खण्डय ज्वलय कर्तय पातय त्वम्
आदेशयन्ननुपदं विपदङ्कमूर्तिः, युद्धे प्रतापनृपतिर्द्रढिमोत्कटोऽभूत्॥

विपदङ्कमूर्तिः-विपदावरणकर्ता प्रतापनृपतिः-राजा प्रताप सिंहः अनुपदम्-पदे-पदे युद्धे-संग्रामे त्वम् छिन्धि-छेदय शत्रूनिति सर्वत्र योज्यम्, भिन्धि-भेदय, परिदारय-विदारय, खण्डय-खण्डिताम् कुरु, ज्वलय-दग्धान् कुरु, कर्तय-कर्तनं कुरु, पातय-निपातय इति अनेन प्रकारेण स्वसेनाम् आदेशयन्-द्रढिमोत्कटः-दार्ढ्येन उत्कटः, अभूत्-अभवत्।

विपत्तियों का वर्णन करने वाले महाराज प्रतापसिंह-पग-पग पर तुम शत्रुओं का छेद डालो, चीर डालो, फाड़ डालो, मारडालो टुकड़े-टुकड़े कर डालो, जला दो, काट दो, गिरा दो, इस तरह का आदेश अपनी सेना को देते हुए दृढ़तापूर्वक अडिग रहे।

अश्वः क्वचित्पतति मर्दित-मुग्ध मुण्डः, दन्ती क्वचिन्नदति कर्तित-दीर्घ-शुण्डः।
एवं रिपून् स पशुमारममारयद्धा, वद्धाकृति-प्रकट-सङ्गर-सङ्गचण्डः॥

क्वचित्-कुत्रचित् शत्रोः मर्दितमुग्धमुण्डः-मर्दितत्वान्मुग्धो मुण्डो यस्याऽसौ अश्वः-घोटकः पतति, क्वचित् कर्तितदीर्घशुण्डः-छिन्नशुण्डादण्डः शत्रोः दन्ती-हस्ती नदति-नादं करोति। हा! एवं इत्थम्, वद्धाकृतिप्रकटसंगरसङ्गचण्डः-वद्धा, आकृतिः-स्वरूपम् यस्य अतः प्रकटः-प्रत्यक्षम् संगरस्य-संग्रामस्य, सगेन चण्डः-उग्रः सः-प्रतापसिंहः रिपून्-शत्रून्-पशुमारममारयत्-पशुमिवमारयतिस्म।

(युद्ध में) कहीं शत्रु का घोड़ा मर्दितमुण्ड वाला होकर गिरता था, तो कहीं शुण्ड कट जाने कारण हाथी चिंघाड़ता था, इस तरह का स्वरूप धारण कर लड़ाई करने वाले उग्र प्रतापसिंह ने शत्रुओं को पशु की तरह मारा।

खड्गेन खण्डयति कोऽपि विपक्षि-पक्षं कश्चित्करोति कुटिलच्छुरिका-प्रहारं।
कश्चिद् भिनत्ति किल सिंहनखेन कश्चिद्, कश्चिद् कृपाणफलकेन खलं छिनत्ति॥

कोऽपि कश्चित् विपक्षिपक्षम्-शत्रुसैन्यम् खड्गेन-कृपाणेन खण्डयति-द्विधा करोति कश्चित् कोऽपि, कुटिलच्छुरिकाप्रहारम्-वक्रच्छुरिकायाः प्रहारम् करोति कश्चित् किल सिंहनखेन-व्याघ्र-नखेन कश्चित् शत्रुम् भिनत्ति कश्चित् सैनिकः कृपाणफलकेन-असिधारया खलम् दुष्टम् छिनत्ति-छेदयति।

लड़ाई में कोई तलवार से शत्रु सेना को काटता था तो कोई शत्रु पर वक्रछुरिका का प्रहार करता था कोई किसी शत्रु का बघनखे से फाड़ता था तो कोई तलवार की धारा से दुष्टों को काटता था।

एवं महासमर-कर्मणि जायमाने, मानेरितं युद्धि सलीममलं स वीक्ष्य :
सद्यः सचेतक-गतिः सविधे तदोये, सैन्यावलीं नृपतिरुल्ललयाञ्चकार ॥

एवं-अनेन प्रकारेण महासंग्रामकर्मणि जायमाने, युद्धिसंग्रामे मानेरितं-मानसिंहेन प्रेरितम् सालीमम्-सलीमनामकम् यवनयुवराजम् अलं-पूर्णरूपेण वीक्ष्य-अवलोक्य, सचेतकगतिः-चेतकस्य गत्यां सह, सः नृपतिः-राजा प्रतापसिंहः, सद्यः-त्वरितम् तदीय-सविधे-तस्यसन्निकटे, सैन्यावलीम्-सेनासमूहम् उल्ललयाञ्चकार-युद्धाय प्रेरयत् ।

उस तरह का घोर संग्राम होने पर युद्ध क्षेत्र मे मानसिंह के द्वारा प्रेरित यवन युवराज सलीम को पूर्णरूप से देखकर चेतक की गति के साथ प्रतापसिंह ने उसके पास अपनी सेना को युद्ध करने के लिए प्रेरित किया ।

आयाहि रे !मुगलवंशकलङ्कसूनो !पूर्णोद्य मे भगवतः कृपयाभिलाषः ।
दग्धो भव प्रतप कोपकृशानुमध्ये श्वास गृहाण नु सलीम !भुवि क्षणाधमं ॥

रे-अरे ! मुगलवंशकलंकिसूनो ! मुगलां वंशस्य कलंकयुक्त-पुत्र ! आयाहि-आगच्छ, भगवतः-परमात्मनः कृपया-दयया, मे मम, अभिलषः-मदीहा, पूर्णः । मम कोपकृशानुमध्ये-कोपाग्नि-मध्ये प्रतप-संतप्तोभव दग्धोभव-ज्वलितो भव । सलीम भुवि-पृथिव्याम् क्षणाधमं-अर्द्धक्षणं यावत् श्वासं-निःश्वासं गृहाण नु ।

अरे मुगलवंश के कलंकी पुत्र ! सलीम आओ । भगवान् की कृपा से मेरी इच्छा पूर्ण हुई । मेरी क्रोधाग्नि में संतप्त होओ, जलो तथा पृथिवीं पर गिरकर क्षणभर श्वास लो ।

यस्याः कृते न गणिता विकटाऽटवी सा सन्त्याजिताश्च शतशो मय शैल-खण्डाः ।
स्वाधीनतामयि सुकुन्त ! गृहाण तां त्वं सद्योऽद्यनृत्तरय ! कृत्तसलीम-मौलिः ॥

यस्याः-स्वतंत्रतायाः कृते सा विकटा-भयंकारी अटवी-अरण्यानी न-नहि गणिता-च-किञ्च, शतशः-अनेके, शैलखण्डाः

-पर्वताः, सन्धाश्रिताः-भ्रामिताः, बत-निश्चयेन अयि, नृत्तरत -नर्तनशील सुकुन्त-सुष्ठुभल्ल अद्य-इदानीम्, सद्यः-शीघ्रम्, कृत्त सलीममौलिः-कृत्तः कर्तितः, सलीमस्य, मौलिः-शिरो येन असौ तथाविधस्त्वम्, ताम् स्वाधीनताम्-स्वतन्त्रताम्- गृहाण-अवाप्नुहि ।

जिस स्वतन्त्रता के लिए मैंने भयानक अरण्यानी की परवाह नही की, सैकड़ों पर्वतखण्डों पर मारा-मारा फिरा, हे नर्तनशील मेरे भाले, सलीम का शिर काटकर उस स्वतन्त्रता को तुम शीघ्र प्राप्त करो ।

चक्राऽऽभ-वक्र-वदनः स विशालभालः, कोदण्ड-चण्ड-परिचालितशस्त्रजालः
निक्षिप्तवान् प्रहत-मोगल-सैन्य-मल्ल, भल्लं नृपाऽकबर-सु-सनुलोम-मौलौ

चक्राभवक्रवदनः-चक्रस्य आभाइव आभा यस्य असौ चक्रभः सइव वक्रं वदनं मुख यस्याऽसौ, विशाल भालः - विशालललाटः दोर्दण्ड चण्ड परिचालितशस्त्र जालः-दोर्दण्डः भुजदण्डः सएव चण्डः -भयंकरः परिचालितम् प्रेरितम् शस्त्राणाम्-प्रहरणानाम् जालम् येनाऽसौ-सः-प्रतापः, प्रहतमोगलसैन्यमल्लम् प्रहतानाम् मोगलानाम् -यवनानाम् यत् सैन्यम् तस्मै मल्लम्-भट्टम्, भल्लम्-कुन्तम् नृपा-कबरसूनुसलीम मौलौ-नृपस्य-राज्ञः अकबरस्य; सूनोः-पुत्रस्य सलीमस्य मौलौ-शिरसि, निक्षिप्तवान्-निचिक्षेप ।

चक्रकेसदृश दीप्त तथा वक्र मुखाकृतियुक्त, विशाल ललाट एव भुजाओं से प्रचण्डरूप वाले अनेक शस्त्रों को चलाने वाले प्रतापसिंह अकबर के पुत्र सलीम के शिर पर मुगल सेना को मारने वाले अपने भाले को चलाया।

जातः प्रताप-विहितो नहि कुन्त-घातः युद्धेऽगनेः समभवन्नु निरभ्र-पातः
आम्रेडितं सकल-दिग्वलये तदाभूत् हा हा सलाम ! नर-भाग ! कुलंतात

विजय; प्रघातः -प्रतापसिंहेनकृतः कुन्तघातः-भल्लप्रहारः

नहि जातः-अभूत् परन्तु किन्तु, युद्धे-समरे अशनेः-वज्रस्य, निरभ्रपातऽ-मेघरहितप्रहारः समभवन्नु-अभूत् इव । तदा-तस्मिन् समये सर्वदिग्वलये-सर्वासुदिक्षु हा ! हा ? सलीम ! नरभीम-नरपुंगव । कुलैकतात वंशस्य प्रधानसंरक्षक ! इति शब्दः आम्रेडनम् -अनेकं बारमभूत् ।

प्रतापसिंह द्वारा किया गया भाले का प्रहार क्या था ? बिना मेघ का वज्रपात था। उस समय सभी दिशाओं में हाय सलीम हाय । नरभीम हाय वंश के एकमात्र सहारा, इस तरह की ध्वनि बार-बार हुई ;

स्तब्धं बभूव गगन, चकिता धरित्री, यच्चेतकेन कटितः स सलीम-हस्ती
दिष्ट्या करीन्द्र-कृततूर्ण-पलायनेन प्राणानहो यवनराड् जहौस्वभाग्यात्

यत् चेतकेन-प्रतापसिंहस्याश्वेन सलीमहस्ती-सलीमस्य दन्तीः कटितः-आवृतः तत-तेन, गगनम्-आकाशम्- स्तब्धम्-मौनम्, धरित्री-भूमिश्च चकिता-आश्चर्यवती, बभूव-अभूत अहो ? दिष्ट्या-भाग्यवशात्.. यवनराट्-यवनेश्वरः स्वभाग्यात्-स्वभाग्येन-करीन्द्रकृततूर्णपलायनेन-हस्तीन्द्रकृतत्वरितगत्या पलायनेन, प्राणान् न जहौ-नाहं मृतः ।

चेतक ने जो सलीम को हाथी को ढ़ंक लिया उससे आकाश शान्त हो गया और पृथिवी आश्चर्य चकित हो गयी । किन्तु भाग्यवशात् हाथी के तीव्रता से भाग जाने के कारण सलीममर न सका ।

तावत्स-शस्त्र-यवनाः परितः प्रचेलुः, राणापनोदनकृते युगपत्समस्ताः
सोऽपि क्षणाय विनिमीलित-लोचनोऽभूत, सूर्यो यथा सजलसज्जलदप्रपञ्चे

तावत् तदात्वे राणापनोदनकृते-प्रतापसिंहंहन्तुम, परितः-सर्वतः समस्ताः-सकलाः सशस्त्रयवनाः-प्रगृहीतशस्त्राः तुरुष्काः, युगपत्-समकालमेव, प्रचेलुः-आवरणम कार्षुः । सजलसज्जलदप्रपञ्चे-जलपूर्ण मेघ समूहे पूर्ण यथा-सूर्य इव, सोऽपि प्रतापसिंहोऽपि क्षणाय

छाया काया, निमीलितः छोत्रनः-आवृतः अभूत्-अभवत् ।

उसी समय प्रताप सिंह को मारने के लिए शस्त्रधारिणी यवन सेना चारों ओर से टूट पड़ी और प्रतापसिंह भी उसमें बादलों से घिरे सूर्य के समान छिप गये ।

एवं प्रतापमपि वीक्ष्य रणे स-तापं, टंकारितं प्रतिविधाय महोग्र-चापं ।
राणा-शिरो मुकुटमात्म गतं च झालामाना विधाय यवनाऽऽहनने प्रसक्तः॥

रणे-युद्धे एवं अनेनप्रकारेण प्रतापमपि-प्रतापसिंहमपि, सतापं-संतापसहितं, वीक्ष्य-दृष्ट्वा, महोग्रचापम्-महाधनुः, टंकारितम्-टंकारान्वितम्-प्रतिविधाय-कृत्वा, राणाशिरोमुकुटम् प्रतापसिंहस्य किरीटम् । आत्मगतं विधाय-स्वोपरि कृत्वा; झालामाना-एतन्नामा वीरः यवनाऽऽहनने-तुरुष्काणाम् वधे, प्रसक्तः-संलग्नोऽभवत् ।

युद्ध में राणा को इस प्रकार से संतप्त देखकर भयंकर धनुष का टंकार करके राणा के मुकुट को अपने शिर पर करके झालामाना यवनों का बध करने में संलग्न हो गये ।

राणाऽऽकृतिञ्च तमवीक्ष्य सलीमसेना रोषोत्कटा कृतवती कठिनं प्रहरं
यस्माच्चतुर्दशसहस्र-रघुप्रवीरा जग्मुः-स्वदेश-ममतोचित-दिव्यलोकम् ॥

रोषोत्कटा-क्रोधतीव्रा, सलीमसेना-यवनानामचमू, राणाकृतिम्-राणारूपेण तम्-झालामाना नामकं वीरं अवेक्ष्य-दृष्टवा, अत्यार्थेन कठिनम्-तीव्रप्रहारं कृतवती-चकार, यस्मात् कारणात् चतुर्दशसहस्ररघुप्रवीराः-चतुर्दशसहस्रसंख्याकाः रघुवंशीया वीराः स्वदेशममतोचितदिव्यलोकान्-स्वदेशस्य ममताऽनुकूलान् देवलोकान् जग्मुः-अगुः ।

क्रुद्ध सलीम की सेना ने राणा के वेश में झाला को देखकर उसके ऊपर कठोर प्रहार की, जिसके कारण चौदह हजार स्वदेश ममता के कारण रघुवंशी वीर कट मरे ।

त्यक्त्वा रणं नृपवरो न जगाम यावत् काञ्चिद्दशां कविमतिःस्थगिता नु॥
तावत् वृत्तं कथङ्कथमपि प्रकट प्रवक्तुं नाऽग्रे क्षमा हत-बला बतलेखनीय

यावत्–यावत्कालपर्यन्तं, नृपवरः–प्रतापसिंहः रणम्–युद्धम् त्यक्त्वा–विहाय, काञ्चिद्दशाम्–काञ्चित् सुरक्षिताम् स्थितिम न–नहि जगाम-अगात, तावत–तावतकालपर्यन्तम्, कविमतिः-कवेर्बुद्धिः स्थगिता–स्थिरा भवतिस्म। बत–निश्चयेन, हतबला–असमर्था इयं लेखनी–तूलिका अग्र–तदग्रे, कथं कथमपि केनापि प्रकारेण, वृत्तं चरित्रम् प्रकटं प्रवक्तुं–वर्णयितुम् न क्षमा–असमर्था अभूत्।

जब तक राणा प्रतापसिंह लड़ाई छोड़कर किसी सुरक्षित स्थिति को नहीं प्राप्त हो गए तब तक यह असमर्थ लेखनी किसी भी प्रकार आगे के चरित्र को लिखने में समर्थ नहीं हुई।

## हल्दीघाटीपरिचयः

स्वाधीनताऽऽर्यभुवि मूर्तिमती स-माना राणाप्रताप-बलवीर्यविभासमाना।
आटीकते समुपमा नहि यां सुशोचिः शाटीव सा जयतिकाचन हल्दिघाटी॥

आर्यभुवि–भारतवर्षे याम–हल्दीघाटीम समुपमा–सदृश्युपमा सुशोचिः–विचार्यमाणा अपि नहि आटीकते–नहि आयाति कविबुद्धाविति शेषः समाना–सम्मानपूर्णा शाटीव–परिधानवस्त्र–मिव राणाप्रतापबलवीर्यविभासमाना–प्रतापसिंहस्य बलेन वीर्येण च दीप्यमाना स मूर्तिमती–शरीरधारिणी, स्वाधीनता स्वतन्त्रता स्वरूपा काचन–अनिर्वचनीयैश्वर्यती हल्दिघाटी जयति–विजयतेतराम्।

अच्छी तरह से बिचार करने पर भी जिसकी कोई उपमा भारतवर्ष में नहीं मिलती, वह राणाप्रताप के बल एवं वीर्य से उद्भासित साड़ी के समान स्वाधीनता की मूर्ति हल्दीघाटी की जय हो।

प्रचोक्दाहसात हे प्रिय मन्दमन्दं वायुर्सदा वहति नन्दनजं मरन्दं।
यां प्रत्यहं किल तदा मतिमाननीयां शोभां दधात्युषसि काञ्चन काञ्चनीयां

हे प्रिय ! यदा प्राची-पूर्वदिक् मन्दमन्दम् हसति-ईषदिस्मितं करोति, यदा प्रातः कालोभवतीत्थः यदा-यस्मिन् समये वायुः-पवनः नन्दनजम्-नन्दनवनीयम् मरन्दम-मकरन्दम् वहति-नयति तदा-तस्मिन् समये प्रत्यहम्-प्रतिदिनम् उषसि-प्रातःकाले या-हल्दीघाटी मतिमानमीयाम्-रमणीयाम् काञ्चनीयाम्-स्वर्णिमाम् काञ्चन-अवर्णनीयाम् शोभाम् दधाति-विभर्ति ।

जिस समय प्रातःकाल पूर्व दिशा मन्द-मन्द मुसुकाती है तथा हवा नन्दन वनके पराग को बिखरेती है उस समय हल्दीघाटी प्रतिदिन प्रातःकाल किसी अवर्णनीय शोभा को धारण करती है।

हाहा कृतां पुनरलं हननैर्मृतानां, यूनां महाबलवतां नु परश्शतानाम्
सस्मृत्यशौर्य भरितं पुराण मूकाऽस्त्यसौ किमिति विज्ञ जनः प्रमाणम्

असौ-इयम् हल्दीघाटो पुनः-भूयः, अलम्-पूर्णम् हननैः-मारणैः 'हाहा' कृताम् मृतानाम्-मृतिगतानाम् परश्शतानाम्-अनेकेषाम्, महाबलवताम्-बलिष्ठानाम् यूनाम्-युवकानाम् शौर्य-भरितम्-शौर्ययुक्तम् पुराणम्-प्रचीनम् चरितम्-वृत्तम् संस्मृत्य-स्मृत्वा -मूकोऽस्ति किम्-जोषमास्ते किम् ? इत्यत्रविज्ञजनः प्रमाणं नु-विद्वांस एव प्रमाणम् सन्ति !

क्या हल्दी घाटी फिर अनेकों मारे गये वीरों की मृत्यु को याद करके मौन हो गयी है ? इसमें तो विद्वान् ही प्रमाण हैं ।

आस्ते प्रताप इह भारत भूमि वीरः हेपान्थ हिन्दुरसि चेतसकृदानतःस्याः
सम्प्रत्यपि प्रतिवदन्निव किन्नुघोर धीर ह्यत्रोरयति घोर-जन समीरः

हे पान्थ-पथिक, इह-हल्दीघाट्याम्, भारतभूमिवीरः-भारत-वर्षीयो वीरः प्रतापः-प्रतापसिंहः, आस्ते-वर्तते । चेत् यदिः त्वम् हिन्दुरसि-हिन्दू वर्तसे, तर्हि सकृत्-एकदा, नतः स्याः-नमस्कुरु किन्तु-सम्प्रत्यपि-इदानीमपि, समीरः-वायुः धीर धीरम्-शनैः-शनैः प्रतिवदन्निव-प्रतिध्वनिम् कुर्वन्निव घोरजनम्-घर्षयन्तम्

जनम्, अधीरयति-धैर्य-रहितं करोति ?

हे पथिक आज भी इस हल्दीघाटी में भारतीयवीर प्रताप सिंह है, यदि तुम हिन्दु हो तो एक बार प्रणाम करो। क्या इसी अर्थ का धीरे-धीरे अनुवाद करती हुई वायु धैर्यवान को भी धैर्य रहित बना रही हैं ?

मा कातराः स्पृशत माँ प्रियपारतन्त्र्याः अद्यापि यैन विहितजननी स्वतंत्रा
यत्रेदमेव गदतीव तरुततिरुगां शाखाकदम्ब-कृतमर्मरमातनोति ॥

हे पराधीनताप्रियाः, माम्-हल्दीघाटीम् मा नहि स्पृशत -स्पर्शं कुरुत, यत अद्यापि-इदानीमपि युष्माभिः-भवद्भिः जननी -भारतमाता; स्वतन्त्रा-स्वाधीना, न विहिता-कृता। यत्र-हल्दी घाट्याम्, तरूणाम्-वृक्षाणाम् ततिः-समूहः, इदमेव गदतिइव-वक्तीव, शाखाकदम्बकृतमर्मरमातनोति-शाखसमूहानाँ अव्यक्तध्वने-र्माध्यमेन अभिव्यनक्ति।

ऐ भीरुओ मुझे छुओ मत। तुम लोगों ने अब तक भारत माँ को स्वतन्त्र नहीं किया, मानो इसी अर्थ को हल्दीघाटी के पेड़ समूह अपनी शाखाओं को मर्मर ध्वनि के माध्यम से अभिव्यक्त करते हैं।

वीराग्रणीरभययुद्धकलाकलापी क्वाऽऽस्तेद्य हा ! स तनयः सनयः प्रतापी
अत्रत्य निर्जनवनेऽथ यदा कदाचिद् मातेव रोदिति सखे, कुररीनु काचित्

हे सखे ! अत्रत्यनिर्जनवने-अस्या हल्दीघाट्याः मानवरहिते वने, यदा कदाचित्-समये-समये, कदाचित् कुररी-क्रौञ्ची, माता इव-माता यथा रोदिति-विलपति, नु-इति वितर्के। हा ! वीराग्रणी-वीराग्रगण्य अभययुद्धकलाकलापी-निर्भययुद्धकलाया अभिज्ञ, सनयः-न्यायकारी, प्रतापो-प्रतापयुक्तः सः तनयः-राणा-प्रतापाख्यः पुत्रः, अद्य, क्व आस्ते-कुत्र गतः ?

हे मित्र ! जब कभी यहाँ के निर्जन वन में क्रौञ्ची विलाप



करती है उस समय लगता है कि भारत माता रो रही हो यह कह कर कि हाय ! निर्भययुद्धकला के जानकार नीतिज्ञ तथा प्रतापी पुत्र प्रताप ! तुम कहाँ गये ?

अद्यापि यत्र जननी मम हन्त राणा विरौति विकलानु 'कुहु' च्छलेन।
अद्यापि धारयति नैव कदापि शोभाँ नूनञ्च तद्विरहिणी प्रकृतिवधूटी

हन्त ! यत्र हल्दीघाटग्राम, अद्यापि-इदानीमपि, मम-मदीया, विकला-निष्प्रभा, जननी-भारतमाता, कुहुच्छलेन-कोकिलाया व्याजेन राणा-राण' इति विरौति-रोदिति नूनम्-निश्चयेन, तद्विरहिणी-राणा विरहिणी वधूटी-नायिका, प्रकृतिः कदापि-कदाचिदपि, शोभाम्-अलंकरणम्, नैव-नहि, धारयति-बिभर्ति

खेद है कि आज भी निष्प्रभ भारतमाता कोकिला के व्याज से 'राणा-राणा' यह कहकर विलाप करती है और राणा की वियोगिनी प्रकृति नायिका अलंकार नहीं धारण करती।

अद्यापि यत्र मुमधुव्रत-झङ्कृतानि, लोलाक्षखञ्जनमनाञ्चित-नर्तनानि
सत्कूजितान्यनुदिनं शुक-शावकानां तौर्यत्रिकं जयति किञ्चन देवतानां।

यत्र-हल्दीघाटग्राम् अद्यापि-इदानीमपि, सुमधुव्रत-झंकृतानि-भ्रमराणांरवाणि लोलाक्ष खञ्जनमनाञ्चितनर्तनानि-लोलाक्षाणाम्-चपलाक्षाणाम, खञ्जनमनानाम्-खञ्जनाख्यपक्षिणां अञ्चितानि-मनोहराणि, नर्तनानि-नृत्यानि, शुकशावकानाम्-कीरशिशूनाम् सत्कूजितानि-सुष्ठुशब्दितानि, एतत् सर्वम् अनुदिनम्-प्रतिदिनम् देवतानाम्-अमराणाम् किञ्चन-किञ्चित् तौर्यत्रिकम्-वाद्यविशेषः जयति।

जिस हल्दीघाटी में आज भी भौरों की झंकार चंचल नेत्र वाले खंजन पक्षियों के नृत्य तथा शुकशावकों के कलरव के माध्यम से प्रतिध्वनित देवताओं के वाद्य विशेष बजते हैं।

पुष्प फल तदनु गंधवह समीरः, खद्योत-पङ्क्तिरमला च पिकालि-गीतिः
अद्यापि यत्र सरल-प्रकृति प्रणीतः पाञ्चपचारमिव पूजनमस्ति मातुः ।

यत्र हल्दीघाट्याम् अद्यापि—इदानीमपि सरल प्रकृतिप्रणीतम् —सुष्ठुप्रकृतिनिर्मितम् पुष्पम्—कुसुमम्, फलम्, गन्धवहः—मरन्द, सुगन्धियुक्तः, समीरः—वायुः अमला—स्वच्छा खद्योत .पङ्क्ति, तदनु —तत्पश्चात् पिकालिगीतिः—कोकिलानां समूहस्य गानम् च मातुः जनन्यः पञ्चोपचारम्—पञ्चविधोपचारयुक्तं पूजनमिव—अर्चनमिवास्ति ।

जिस हल्दीघाटी में सरल प्रकृति प्रणीत पुष्प: फल सुगन्धित वायु प्रकाश करने वाले जुगुनुओं की पंक्ति तथा कोयल की पञ्चम राग ये पाँचो मिलकर मानो भारत माता की पञ्चोपचार पूजन करते हैं ।

नीलेन पक्ष-निवहेन खमाहसंत, चञ्चवा फलानि विमलानिसमञ्चयंतः ।
श्रीराम नाम मधुरं-मधुरं क्वणन्तः अद्यापि यत्र सुशुका विलसति संतः

यत्र—हल्दीघाट्याम्, नीलेन नीलवर्णवता, पक्षनिवहेन—पक्ष समूहेन, खम्—आकाशाम् आहसन्तः—सर्वतोविकाशयन्तः चञ्च्वा—चञ्चुपुटेन, विमलानि—स्वच्छानि, फलानि, समञ्चयन्तः धारयन्तः, श्रीराम नाम इति शब्दम् मधुर—मधुरम्—अतिमधुरम् क्वणन्तः —पठन्तः सन्तः—सज्जनाः, सुशुकाः—कीराः अद्यापि—इदानीमपि, विलसन्ति विहारं कुर्वन्ति ।

जहाँ नीलवर्ण के पखों द्वारा आकाश को उद्भासित करने वाले चोंच में स्वच्छ फलों को धारण करने वाले, अत्यन्त मधुर स्वर में श्रीराम नाम पढ़ने वाले शुक रूपी सन्त आज भी बिहार करते हैं ।

वीक्ष्य प्रभा-हसितचारु-पुरंदराणां, सङ्गं स नृत्यममल शिखिसुन्दराणां
सम्भासते वनभुवः सुषमातुदारः, हर्षाङ्कितो हरति हीरक कण्ठहारः

वनभुवः-वनभूमेः सुषमात्युदारः-अत्यन्तविकसितं सौन्दर्यम् हर्षान्वितः-प्रहर्षान्वितः स हरितहीरककण्ठहारः-हरिद्वर्णानां तृणाराम् वृक्षाणाञ्च अवलिरेव नीलरंगिकण्ठभरणम्, प्रभाहसित-चारुपुरन्दराणाम्-प्रभया कान्त्या हसितम् चारु पुरन्दरम्-इन्द्रो यैस्ते तेषाम्, शिखिसुन्दराणाम्-मनोज्ञ मयूराणाम् अमलम्-स्वच्छम् नृत्यम्-नर्तनम् सङ्गम्-साहचर्यम् च वीक्ष्य-अवलोक्य सम्भासते-प्रकाशते।

वन भूमि को उत्कृष्ट शोभाऔर प्रकर्षयुक्त हरित गुणों एवं वृक्ष पंक्तियों की नीलमणि माला तथा अपनी कान्ति से बढ़ जाती है।

चूडामणिः सकलभारत-भामिनीनां पत्नी प्रतापनृपतेरमलाऽत्र शैले प्राण-प्रदानमकरोत् पतिपादपद्मे किन्त्वेकबारमपि हा नहि हाऽकरोत्सा

अत्र-हल्दीघाट्याम् शैले-पर्वते, सकलभारतभामिनीनाम् -सम्पूर्णभारतरमणीनाम् चूडामणिः-अग्रगण्या. प्रतापनृपतेः-राज्ञः प्रतापसिंहस्य अमला-सर्वथादोषरहिता, पत्नी-भार्या, पतिपादपद्मे -प्रतापस्य चरणकमले, प्राणप्रदानम्-प्रण दानम् अकरोत्। किन्तु हा? सा-प्रतापपत्नी, एकबारमपि-सकृदपि हा? इति शब्दम् नहि अकरोत्-अकार्षीत्, पतिपदप्रेमातिशयात्।

यहां के पर्वत पर सम्पूर्ण भारतीय रमणोयों में श्रेष्ठ राजों प्रतापसिंह की पत्नी ने बिना हा? किये ही अपने पति के चरण में प्राण दान कर दिया।

अत्र प्रतापनृपतेः प्रकट-प्रतापा, एकदापि हन्त? शताधाऽभवदस्र-धारा युद्धेऽधिकोशमपि शत्रुवत्रे क्रमेणव्याप्तस्ता ततः सहचरी चपलेति चित्रम्

हन्त! अरे अत्र हल्दीघाट्याम् प्रतापनृपतेः-राज्ञः प्रतापस्य, प्रकटप्रतापा-प्रत्यक्षप्रतापवता, एका अपि असृग्धारा-रक्तधारा, शतधा-शतस्रोतस्विनी अभवत्-अभूत। युद्धे-सङ्गरे, अधिकोशम्-

कोशान्तरितम् असि-ज्योत्स्ना-चन्द्रिका क्रमेण-क्रमशः, शत्रुवधे-विपक्षमारणे तमः सहचरी-अन्धकारसहचरिणी, चपला-विद्युत् अभूत् इति चित्रम्-आश्चर्यस्य विषयः ।

यहां हल्दीघाटी में राणाप्रताप के प्रभाव को प्रकट करने वाली अकेली रक्तधार अस्त्रों की धाराओं में परिवर्तित हो गई। कोश (म्यान) में रहने वाली ज्योत्स्ना (तलवार की चमक) शत्रुओं के बध के समय अन्धकार की संगिनी चपला बन गयी ।

अत्रैव वीरजनमौलिमहार्हरत्नं, धीराग्रणीरगणितव्रणवान् स झाला ।
राणाऽर्थमेव हहहा समरेऽसहायः प्राणाञ्जहौ न तु पलायनतत्परोऽभूत् ॥

हाहा ! दुःखस्यास्ति विषया यत्, अत्रैव-हल्दीघाट्याम् एव समरे युद्धे, असहायः-सहायकरहितः वीरजनमौलिमहार्हरत्नम्-वीराणां-मुकुटमणिः, धीराग्रणी-धीराग्रगण्यः, अगणितव्रणवान्-असंख्यव्रणयुक्तः सः-प्रख्यातः, 'झाला' नामको वीरः, रणार्थम्-संगराय, प्राणान्-असून, जहौ-तत्याज एव, किन्तु पलायन-तत्परः-समरपराङ्मुखः, न अभूत्-अभवत् ।

इस हल्दीघाटी में ही सहायरहित वीराग्रगण्य वीरों के मुकुटमणि 'झाला' ने लड़ाई में प्राणों का त्याग दिया, किन्तु लड़ाई से भगा नहीं ।

लोकत्रयेऽतिविदिता बलिवेदिकेयं यत्र प्रतापनृपतेरनुयायिवर्गः ।
सङ्क्रीतवान् किल परश्शतमौलिदानात् स्वातन्त्र्यमार्यवर-वीरवसुन्धरायाः ॥

इयम्-हल्दीघाटी रूपिणी, बलिवेदिका-मातुःपूजनवेदी, लोकत्रये-त्रिलोक्याम्, अतिविदिता-प्रख्याततमा, यत्र-यस्यां बलिवेदिकायाम्, प्रतापनृपतेः-राज्ञः प्रतापस्य, अनुयायिवर्गः-अनुगन्तारः, परश्शतमौलिदानात्-असंख्यशिरः प्रदानेन, आर्यवरवीरवसुन्धरायाः-भारतीयवीराणाम् पृथिव्याः, स्वतन्त्र्यम्, स्वतन्त्रताम्, संक्रीतवान्-अक्रीणीत् ।



यह हल्दीघाटी नामक बलिवेदी त्रलोक्य में प्रख्यात है। यहां ही अनेकों शिरों को देकर प्रतापसिंह के अनुचरों ने स्वतन्त्रता खरीदा था।

वीराश्चतुर्दशसहस्रमिता इहैव, मृत्युं यथा शयन-तूलमथाऽऽलिलिङ्गुः
किन्तु प्रशस्यतमशस्यमहीयसीं स्वां सन्मातरं नहि मनाग् विजहुर्धरित्रीम्

अथ, चतुर्दशसहस्रमिताः-चतुर्दशसहस्रसंख्याकाः, वीराः-भटाः, इहैव हल्दीघाट्यामेव, शयनतूलम्-शय्याम् यथा-इव, मरणम् आलिलिङ्गुः-आलिङ्गनं चक्रुः। किन्तु-परन्तु, प्रशस्यतमशस्यमहीयसीम श्रेष्ठधनधान्यपूर्णाम्, महीयसीम्-गुर्वीम्। स्वाम्-स्वकीयाम्, सन्मातरम् धरित्रीं-भारतमातरम्, मनाक्-अल्पम् अपि, न हि विजहुः -तत्यजुः।

यहां-पर ही चौदह हजार वीरों ने शय्या के समान मृत्यु का वरण किया, किन्तु श्रेष्ठ धन धान्य पूर्ण अपनी मातृ-भूमि का बिल्कुल ही त्याग नहीं किया।

अत्रैव वीरजन-शोणित-शोण-गङ्गा, भूत्वा सहस्रपथगा गतिमाततान।
अद्दर्शनेन रसनेन च मज्जनेन, देवैः सहैव ऋषयः पितरोऽपि तृप्ताः॥

अत्रैव-हल्दीघाट्यामेव, वीरजनशोणितशोणगङ्गा-वीराणां रुधिर प्रभवा रक्ता गङ्गा, सहस्रपथगा-अनेकधारवती भूत्वा गतिम्-संचारम् आततान्--वितस्तार, यद् दर्शनेन-यस्या अवलोकनेन, रसनेन-पानेन, मज्जनेन-अवगाहनेन च देवैः सह-देवताभिस्साकम्, ऋषयः पितरः अपि तृप्ता भवन्तिा।

इस हल्दीघाटी में ही बीरों के रक्त से समुद्भूत लाल गङ्गा हजार धारओं में बह चली जिसके दर्शन, पान और मज्जन से देवता ऋषि तथा पितृ गण तृप्त होते हैं।

सैषा स्थली चकित-चेतक चङ्क्रमाणां, सैषा स्थली कुटिल-कुन्त-पराक्रमाणां।
सैषा स्थली प्रियतमाप्यसुतोऽमराणां सैषास्थली भयकरी नरपामराणाम्

सा एषा-प्रख्यातेयम्, चकित चेतकचंक्रमाणाम्-अद्भुतचेतकस्य संचाराणाम्, स्थली-प्राकृवा भूमिः वर्तते, सैषा-हल्दीघाटीः कुटिल कुन्तपराक्रमाणाम्-वक्रभल्लशौर्याणाम्, स्थली वर्तते, सैषास्थली-हल्दीघाटीः अमराणाम्-देवानाम् असूतः अपि प्रियतमा-प्राणेभ्योऽपि गरीयसी वर्तते, सैषास्थली-हल्दीघाटी नरपामराणाम्-अधमजनानां भयकरी-भयंकरी वर्तते ।

यह हल्दीघाटी अद्भुत चेतक की भ्रमण स्थली है, बक्र भाले के प्राक्रम प्रदर्शन की स्थली है, यही देवताओं को प्राण से भी प्रियतमा तथा अधम नरों को भयभीत करने वाली है ।

--ॐ--

